6·2 अन्ये तु—विश्लिष्टोपाधिभेदोऽननुसन्धानप्रयोजकः । तथा च हस्तावच्छिन्नस्य चरणावच्छिन्नवेदनानुसन्धानाभ्युपगमेऽपि न दोषः । न चैवं सति गर्भस्थस्य मातृसुखानुसन्धानप्रसङ्गः ; एकस्मिन्नवयविन्यवयवभावेनाननुप्रविष्टयोर्विश्लिष्टशब्देन विवक्षितत्वात्, मातृगर्भशरीरयोस्तथात्वात्—इत्याहुः । न च

"उद्यदायुधदोर्दण्डाः पतितस्वशिरोऽक्षिभिः ।
पश्यन्तः पातयन्ति स्म कबन्धा अप्यरीनिह ॥"[131]

इतिभारतोक्त्या विश्लेषेऽप्यनुसन्धानमवगतमिति वाच्यम्; तत्रापि शिरःकबन्धयोरेकस्मिन् अवयविन्यवयवभावेनानुप्रविष्टचरत्वात्; शिरश्छेदनानन्तरं मूर्छामरणयोरन्यतरावश्यंभावेन दृष्टविरुद्धार्थस्य तादृशवचनस्य कैमुत्यन्यायेन योधोत्साहातिशयप्रशंसापरत्वात्; तादृक्प्रभावयुक्तपुरुषविशेषविषयत्वेन भूतार्थवादत्वेऽपि निरुक्तस्योत्सर्गतोऽननुसन्धानतन्त्रत्वाविघाताच्च । अत एवोक्तवक्ष्यमाणपक्षेषु योगिनां जातिस्मराणां च शरीरान्तरवृत्तान्तानुसन्धाने न दोषप्रसक्तिः ।

6·3 अपरे तु शरीरैक्यभेदावनुसन्धानतदभावप्रयोजकोपाधी, बाल्यभवान्तरानुभूतयोरनुसन्धानतदभावदृष्टेः । न च बाल्ययौवनयोरपि शरीरभेदः शङ्कनीयः, प्रत्यभिज्ञानात् । न च परिमाणभेदात् तद्भेदावगमः; एकस्मिन् वृक्षे मूलाग्रभेदेनेव कालभेदेनैकस्मिन्ननेकपरिमाणान्वयोपपत्तेः[132] । नन्ववयवोपचयमन्तरेण न परिमाणभेदः, अवयवाश्च पश्चादापतन्तो न पूर्वसिद्धशरीरं परियुज्यन्त[133] इति परिमाणभेदे शरीरभेद आवश्यक इति चेत्, न; प्रदीपारोपणसमसमयसौधोदरव्यापिप्रभामण्डलविकासतत्पिधानसमसमयतत्सङ्कोचाद्यनुरोधिनः[134], परमाणुप्रक्रियारम्भवादस्यानभ्युपगमात्; विवर्तवादे चैन्द्रजालिकदर्शितशरीरवद् विनैवावयवोपचयं मायया शरीरस्य वृद्ध्युपपत्तेः—इत्याहुः ।

6·4 इतरे त्वन्तःकरणाभेदतद्भेदाभ्यामनुसन्धानाननुसन्धानव्यवस्थामाहुः । अयं च पक्षः प्रागुपपादितः ।

6·5 केचित्त्वज्ञानानि जीवभेदोपाधिभूतानि नानेति स्वीकृत्य तद्भेदाभेदाभ्यां अनुसन्धानाननुसन्धानव्यवस्थामाहुः ।

अत्र केचित् "अंशो नानाव्यपदेशात्" इत्यधिकरणे[135] "अदृष्टानियमात्"[136] "अभिसन्ध्यादिष्वपि चैवम्"[137] "प्रदेशादिति चेन्नान्तर्भावात्" [138] इतिसूत्रतद्भाष्यरीतिमनुसृत्य एकस्मिन्नात्मन्युपाधिभेदेन व्यवस्थानुपगमे कणभुगादिरीत्यात्मभेदवादेऽपि व्यवस्थानुपपत्तितौल्यमाहुः। तथा हि—चैत्रचरणलग्नकण्टकेन चैत्रस्य वेदनोत्पादनसमये अन्येषामप्यात्मनां कुतो वेदना न जायते, सर्वात्मनां सर्वगतत्वेन चैत्रशरीरान्तर्भावाविशेषात्? न च यस्य शरीरे कण्टकवेधादि तस्यैव वेदना नान्येषां इति व्यवस्था; सर्वात्मसन्निधावुत्पद्यमानं शरीरं कस्यचिदेव नान्येषामिति नियन्तुमशक्यत्वात्। न च यददृष्टोत्पादितं यच्छरीरं तत्तदीयं इति नियमः, अदृष्टस्यापि नियमासिद्धेः। यदा हि तददृष्टोत्पादनाय केनचिदात्मना संयुज्यते मनः संयुज्यत एव तदाऽन्यैरपि; कथं कारणसाधारण्ये क्वचिदेव तददृष्टमुत्पद्येत? ननु मनस्संयोगमात्रसाधारण्येऽपि "अहमिदं फलं प्राप्नवानि" [139] इत्यभिसन्धिरदृष्टोत्पादककर्मानुकूलकृतिरित्येवमादि व्यवस्थितमिति तत एवादृष्टनियमो भविष्यतीति चेत्, न; अभिसन्ध्यादीनामपि साधारणमनस्संयोगादिनिष्पाद्यतया व्यवस्थित्यसिद्धेः। ननु स्वकीयमनस्संयोगोऽभिसन्ध्यादिकारणमिति मनस्संयोग एवासाधारणो भविष्यतीति, न; नित्यं सर्वात्मसंयुक्तं मनः कस्यचिदेव स्वमिति नियन्तुमशक्यत्वात्। न चादृष्टविशेषादात्मविशेषाणां मनसस्स्वस्वामिभावसिद्धिः, तस्याप्यदृष्टस्य पूर्ववद्व्यवस्थित्यसिद्धेः। नन्वात्मनां विभुत्वेऽपि तेषां प्रदेशविशेषा एव बन्धभाज इति आत्मान्तराणां चैत्रशरीरे तत्प्रदेशविशेषाभावात् सुखदुःखादिव्यवस्था भविष्यतीति, न; यस्मिन् प्रदेशे चैत्रः सुखाद्यनुभूय तस्मात् प्रदेशादपक्रान्तस्तस्मिन्नेव मैत्रे समागते तस्यापि तत्र सुखदुःखादिदर्शनेन शरीरान्तरे आत्मान्तरप्रदेशविशेषस्याप्यन्तर्भावात्। तस्मादात्मभेदेऽपि व्यवस्था दुरुपपादैव। कथंचित्तदुपपादने च श्रुत्यनुरोधाल्लाघवाच्चैकात्म्यमङ्गीकृत्य तत्रैव तदुपपादनं कर्तुं युक्तम्—इति। 6·61

सन्तु तर्ह्यणव एवात्मानो यदि विभुत्वे व्यवस्था न सुवचा। मैवम्; आत्मनामणुत्वे कदाचित् सर्वाङ्गीणसुखोदयस्य करशिरश्चरणाधिष्ठानस्य चानुपपत्तेः। 6·62

6·621 यदत्रार्वाचीनकल्पनम्—उत्क्रान्तिगत्यागतिश्रवणान्यथानुपपत्त्या "अणुर्ह्येवैष आत्मा यं वा एते सिनीतः पुण्यं च पापं च", "वालाग्रशतभागस्य"[140] इत्यादिश्रुतिषु साक्षादणुत्वश्रवणेन च अणव एव जीवाः। तेषामणुत्वेऽपि ज्ञानसुखादीनां प्रदीपप्रभान्यायेन आश्रयातिरिक्तप्रदेशविशेषव्यापिगुणतया न सर्वाङ्गीणसुखानुपलब्धिः[141]। "द्रोणं बृहस्पतेर्भागम्"[142] इत्यादिस्मृत्यनुरोधेन जीवानामंशसत्त्वात् करशिरश्चरणाद्यनुगतेषु सुखदुःखादियौगपद्यं कायव्यूहगतेषु योगिनां भोगवैचित्र्यं चेति न काचिदनुपपत्तिः। एवं च जीवानामणुत्वेनासङ्करात् सुखदुःखादिव्यवस्था, विभोरीश्वराद् भेदश्च—इति।

6·6221 अत्रोक्तमद्वैतदीपिकायाम्[143]—एवमपि कथं व्यवस्थासिद्धिः, चैत्रस्य पादे वेदना शिरसि सुखम् इति स्वांशभेदगतसुखदुःखानुसन्धानवन्मैत्रगतसुखदुःखानुसन्धानस्यापि दुर्वारत्वात्? अविशेषो हि चैत्रजीवात्तदंशयोर्मैत्रस्य च भेदः; कायव्यूहस्थले वियुज्यान्यत्र संसरणसमर्थानामंशानां जीवाद्भेदावश्यंभावात्, अंशांशिनोस्त्वया भेदाभेदाभ्युपगमाच्च।

6·6222 न च शुद्धभेदोऽननुसन्धानप्रयोजक इति वाच्यम्। शुद्धत्वं हि भेदस्यांशांशिभावासहचरितत्वं अभेदासहचरितत्वं वा स्यात्। नाद्यः; "अंशो ह्येष परमस्य", "ममैवांशो जीवलोके"[144] "अंशो नानाव्यपदेशात्"[145] इति श्रुतिस्मृतिसूत्रैर्जीवस्य ब्रह्मांशत्वप्रतिपादनेन ब्रह्मजीवयोर्भोगसाङ्कर्यप्रसङ्गात्।

ननु जीवांशानां जीवं प्रतीव जीवस्य ब्रह्म प्रति नांशत्वम्, किं तु चन्द्रबिम्बस्य गुरुबिम्बः शतांशः इतिवत् सदृशत्वे सति ततो न्यूनत्वमात्रं औपचारिकांशत्वमिति चेत्, किंतदतिरेकेण मुख्यमंशत्वं जीवांशानां जीवं प्रति, यदत्राननुसन्धानप्रयोजकशरीरे निवेश्यते? न तावत् पटं प्रति तन्तूनामिवारम्भकत्वम्, जीवस्यानादित्वात्; नापि महाकाशं प्रति घटाकाशादीनामिव प्रदेशत्वम्, टङ्कच्छिन्नपाषाणशकलादीनामिव खण्डत्वं वा; अणुत्वेन निष्प्रदेशत्वादच्छेद्यत्वाच्च। भिन्नाभिन्नद्रव्यत्वमंशत्वमभिमतमिति चेत्, न; तथा सति जीवेश्वरयोर्जीवानां च भोगसाङ्कर्यप्रसङ्गात्; स्वतो भिन्नानां तेषां चेतनत्वादिना

अभेदस्यापि त्वयाङ्गीकारात्; समूहसमूहिनोर्भेदाभेदवादिनस्तव मते एक-समूहान्तर्गतजीवानां परस्परमप्यभेदसत्त्वाच्च, स्वाभिन्नसमूहाभिन्नेन स्वस्याप्यभेदस्य दुर्वारत्वात्; "यदि संयोगादीनां जातेश्चानेकाश्रितत्वं स्यात्, तदा गुणगुण्यादे-रभेदाद् घटाभिन्नसंयोगाभिन्नपटादेरपि घटाभेदः प्रसज्येत" इत्यादि वदता त्वया तदभिन्नाभिन्नस्य तदभेदनियमाभ्युपगमात्। न च जीवान्तरसाधारणचेतनत्वादि-धर्मैकरूप्यैकसमूहान्तर्गतत्वादिप्रयुक्ताभेदविलक्षणमभेदान्तरमंशांशिनोरस्ति भेदे-ऽप्यनुसन्धानप्रयोजकम्, यदत्रानतिप्रसङ्गाय विवक्ष्येत; तथा सति तस्यैव विशिष्य निर्वक्तव्यत्वापत्तेः। धर्मैकरूप्याद्यप्रयुक्तत्वमंशांशिनोरभेदे विशेष इति चेत्, न; जीवतदंशयोश्चेतनत्वादिधर्मैकरूप्यसत्त्वेनैकशरीरावच्छेदे कायव्यूह-मेलने च समूहत्वेन च तयोरभेदे धर्मैकरूप्यादिप्रयुक्तत्वस्यापि सद्भावात्। धर्मैकरूप्यादिप्रयुक्ताभेदान्तरसत्त्वेऽपि जीवतदंशयोरंशांशिभावप्रयोजकाभेदो न तत्प्रयुक्त इति चेत्, न; तयोरभेदद्वयाभावात्, त्वन्मतेऽधिकरणैक्ये सति भेदस्याभेदस्य वा प्रतियोगिभेदेन तदाकारभेदेन वा अनेकत्वानभ्युपगमात्। तस्मादाद्यपक्षे सुस्थोऽतिप्रसङ्गः। एतेनैव द्वितीयपक्षोऽपि निरस्तः; अभेदासह-चरितस्य भेदस्याननुसन्धानप्रयोजकत्वे उक्तरीत्या त्वन्मते जीवब्रह्मणोर्जीवानां चाभेदस्यापि सत्त्वेनातिप्रसङ्गस्य दुर्वारत्वात्।

"नन्वभेदप्रत्यक्षमनुसन्धाने प्रयोजकम्[146] इति तदभावेऽननुसन्धानम्; 6·623
स्वस्य स्वाभेदः स्वांशाभेदश्च प्रत्यक्ष इति तद्द्रष्टु[147] दुःखाद्यनुसन्धानम्; जीवान्त-रेणाभेदसत्त्वेऽपि तस्याप्रत्यक्षत्वान्न तद्दुःखाद्यनुसन्धानम्; जातिस्मरस्य प्राग्-भवीयात्मनाप्यभेदस्य प्रत्यक्षसत्त्वात् तद्वृत्तान्तानुसन्धानम्, अन्येषां तद-भावान्नेत्यादि सर्वं सङ्गच्छते" इति चेत्, तर्ह्येकात्म्यवादेऽपि सर्वात्मत्वावरका-ज्ञानावरणाच्चैत्रस्य न मैत्रात्माद्यभेदप्रत्यक्षमिति तत एव सर्वव्यवस्थोपपत्तेर्व्यर्थः श्रुतिविरुद्ध आत्मभेदाभ्युपगमः।

न चेत्थमपि प्रपञ्चतत्त्ववादिनस्तव व्यवस्थानिर्वाहः, सर्वज्ञस्येश्वरस्य वस्तु- 6·624
सज्जीवान्तराभेदप्रत्यक्षावश्यंभावेन जीवेषु दुःखवत्सु "अहं दुःखी" इत्यनुभवा-

पत्तेः। अस्मन्मते त्वीश्वरः स्वाभिन्ने जीवे संसारं प्रतिमुखमालिन्यमिव पश्यन्नपि मिथ्यात्वनिश्चयान्न शोचतीति नैष प्रसङ्गः।

6·625 स्यादेतत्; मा भूदंशभेदः करशिरश्चरणादीनां कायव्यूहस्य चाधिष्ठानम्, आत्मदीपस्यानपायिनी ज्ञानप्रभास्ति व्यापिनीति सैव सर्वाधिष्ठानं भविष्यतीति चेत्, न; ज्ञानवद् आत्मधर्मस्य सुखदुःखभोगस्य ज्ञानमाश्रित्योत्पत्त्यसम्भवेन करचरणाद्यवयवभेदेनावयविनः[148], कायव्यूहवतः कायभेदेन च भोगवैचित्र्याभावप्रसङ्गात्, सुखदुःखभोगादि ज्ञानधर्म एव नात्मधर्म इत्यभ्युपगमे तद्वैचित्र्येण आत्मगुणस्य ज्ञानस्य भेदसिद्धावप्यात्मनो भेदासिद्ध्या भोगवैचित्र्यादिनात्माभेदप्रतिक्षेपायोगात्[149]; भोगाद्याश्रयस्यात्मनोऽणुत्वेन प्रतिशरीरं विच्छिन्नतया तद्व्यापित्ववाद इव तदभेदवाद इव च न सर्वधर्मसङ्करापत्तिरितिमतहानेश्च। तस्माज्जीवस्याणुत्वोपगमेन व्यवस्थोपपादनं न युक्तम्।

6·6261 नापि तेन तस्येश्वराद् भेदसाधनं युक्तम्। उत्क्रान्त्यादिश्रवणात् साक्षादणुत्वश्रवणाच्च अणुर्जीव इति वदतस्तव मते "तत् सृष्ट्वा। तदेवानुप्राविशत्"[150] "अन्तः प्रविष्टश्शास्ता जनानाम्"[151] "गुहां प्रविष्टौ परमे परार्धे"[152] इत्यादिश्रुतिषु प्रवेशादिश्रवणात् "स एषोऽणिमा एष मन्त्रात्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा"[153] इति श्रुतौ साक्षादणुत्वश्रवणाच्च परोऽप्यणुरेव सिद्ध्येदिति कुतः परजीवयोर्विभुत्वाणुत्वाभ्यां भेदसिद्धिः?

6·6262 ननु "आकाशवत् सर्वगतश्च नित्यः" "ज्यायान् दिवो ज्यायानन्तरिक्षात्"[154] इत्यादिश्रवणात् सर्वप्रपञ्चोपादानत्वाच्च परस्य सर्वगतत्वसिद्धेः तदणुत्वश्रुतयः उपासनार्थाः दुर्ग्रहत्वाभिप्राया वा उन्नेयाः; प्रवेशश्रुतयश्च शरीराद्युपाधिना निर्वाह्याः। न च जीवोत्क्रान्त्यादिश्रुतयोऽपि बुद्ध्या उपाधिना निर्वोढुं शक्या इति शङ्क्यम्; "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति"[155] इति प्राणाख्यबुद्ध्युत्क्रान्तेः प्रागेव जीवोत्क्रान्तिवचनात्; "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्"[156] इति नामरूपविमोक्षानन्तरमपि गतिश्रवणाच्च; "तद्य-

थाऽनस्सुसमाहितमुत्सर्जन् यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति"[157] इति स्वाभाविकगत्याश्रयशकटदृष्टान्तोक्तेश्च । इति चेत्,

नैतत्सारम्; "स वा एष महानज आत्मा योऽयं विज्ञानमयः,"[158] 6·6263

"घटसंवृतमाकाशं नीयमाने घटे यथा ।

घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥"[159]

इत्यादिश्रुतिषु जीवस्यापि विभुत्वश्रवणात् । त्वन्मते प्रकृतेरेव जगदुपादानत्वेन ब्रह्मणो जगदुपादानत्वाभावात्, जीवस्य कायव्यूहगतसुखदुःखोपादानत्ववदणुत्वेऽपि जगदुपादानत्वसम्भवाच्च, ततस्तस्य सर्वगतत्वासिद्धेः; तत्प्रवेशश्रुतीनां शरीरोपाधिकत्वकल्पने जीवोत्क्रान्त्यादिश्रुतीनामपि बुद्ध्युपाधिकत्वोपगमसम्भवात्; "पञ्चवृत्तिर्मनोवद्व्यपदिश्यते"[160] इतिसूत्रभाष्ये बुद्धिप्राणयोः कार्यभेदाद्भेदस्य प्रतिपादितत्वेन बुद्ध्युपाधिके जीवे प्रथममुत्क्रामति प्राणस्यानूत्क्रमणोपपत्तेः; नामरूपविमोक्षानन्तरं ब्रह्मप्राप्तिश्रवणस्य प्राप्तरि जीवे इव प्राप्तव्ये ब्रह्मण्यपि विभुत्वविरोधित्वात् । प्राकृतनामरूपविमोक्षानन्तरमप्यप्राकृतलोकविग्रहाद्युपधानेन ब्रह्मणः प्राप्तव्यत्ववादिमते प्राप्तुर्जीवस्याप्यप्राकृतदेहेन्द्रियादिसत्त्वेन तदुपधानेन ब्रह्मप्राप्तिश्रवणाविरोधात्; स्वाभाविकगत्याश्रयशकटदृष्टान्तश्रवणमात्राज्जीवस्य स्वाभाविकगतिसिद्धौ "गुहां प्रविष्टौ"[161] इति स्वाभाविकप्रवेशाश्रयजीवसमभिव्याहारेण ब्रह्मणोऽपि स्वाभाविकप्रवेशसिद्धिसम्भवात्;[162] ब्रह्मजीवोभयान्वयिन एकस्य प्रविष्टपदस्य[163] एकरूपप्रवेशपरत्वस्य वक्तव्यत्वात् । तस्मात् परमते ब्रह्मजीवयोर्विभुत्वाणुत्वव्यवस्थित्यसिद्धेः ततो भेदसिद्धिं प्रत्याशा दूरादपनेया । अस्मन्मते ब्रह्मात्मैक्यपरमहावाक्यानुरोधेनावान्तरवाक्यानां नेयत्वात्स्वरूपेण जीवस्य विभुत्वम्, औपाधिकरूपेण परिच्छेद इत्यादिप्रकारेण जीवब्रह्मभेदप्रापकश्रुतीनामुपपादनं[164] भाष्यादिषु व्यक्तम् । तस्मादचेतनप्रपञ्चस्य मिथ्यात्वात् चेतनप्रपञ्चस्य ब्रह्माभेदाच्च न वेदान्तानामद्वितीये ब्रह्मणि विद्यैकप्राप्ये समन्वयस्य कश्चिद्विरोध इति ।

इति द्वितीयः परिच्छेदः ।

1·0 ननु कथं विद्ययैव ब्रह्मप्राप्तिः, यावता कर्मणामपि तत्प्राप्तिहेतुत्वं स्मर्यते, "तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने" इति? सत्यम्; "नान्यः पन्थाः" इतिश्रुतेः[1], नित्यसिद्धब्रह्मावाप्तौ कण्ठगतविस्मृतकनकमयमालावाप्तितुल्यायां विद्यातिरिक्तस्य साधनत्वासम्भवाच्च, ब्रह्मावाप्तौ परम्परया कर्मापेक्षपरा[2] तादृशी स्मृतिः। क्व तर्हि कर्मणामुपयोगः?

1·1 अत्र भामतीमतानुवर्तिन आहुः[3]—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन"[4] इति श्रुतेर्विद्यासम्पादनद्वारा ब्रह्मावाप्त्युपायभूतायां विविदिषायामुपयोगः[5]। ननु इष्यमाणविद्यायामेवोपयोगः किं न स्यात्? न[6], प्रत्ययार्थस्य प्राधान्यात्; "विद्यासंप्रयोगात् प्रत्यासन्नानि शमदमादीनि[7] विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनि" इति सर्वापेक्षाधिकरणभाष्याच्च[8]। "ननु विविदिषार्थं यज्ञाद्यनुष्ठातुर्वेदगोचरेच्छावत्त्वे विविदिषायाः सिद्धत्वेन तदभावे वेदनोपायविविदिषायां कामनासम्भवेन च विविदिषार्थं यज्ञाद्यनुष्ठानाभावात्[9], न यज्ञादीनां विविदिषायां विनियोगो युक्तः" इति चेत्, न। अन्नद्वेषेण कार्श्यं प्राप्तस्य तत्परिहारायान्नविषयौन्मुख्यलक्षणाया[10]-मिच्छयां सत्यामप्युत्कटाजीर्णादिप्रयुक्तधातुवैषम्यदोषात् तत्र प्रवृत्तिपर्यन्ता रुचिर्न जायत इति तद्रोगनिवर्तकौषधविधिवत्[11] निरतिशयानन्दरूपं ब्रह्म तत्प्राप्तौ विद्या साधनमित्यर्थे प्राचीनबहुजन्मानुष्ठितानभिसंहितफलकनित्यनैमित्तिक-कर्मोपसञ्जातचित्तप्रसादमहिम्ना सम्पन्नविश्वासस्य पुरुषस्य ब्रह्मावाप्तौ विद्यायां च तदौन्मुख्यलक्षणाया[10] मिच्छायां सत्यामप्यनादिभवसञ्चितानेकदुरितदोषेणा-स्तिककामुकस्य हेयकर्मणीव विषयभोगे प्रावण्यं सम्पादयता प्रतिबन्धाद्विद्या-साधने श्रवणादौ प्रवृत्तिपर्यन्ता रुचिर्न जायत इति प्रतिबन्धनिरासपूर्वं तत्सम्पा-दकयज्ञादिविधानोपपत्तेः—इति।

विवरणानुसारिणस्त्वाहुः—प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति सामान्यन्यायाद् इच्छाविषयतया शब्दबोध्ये एव शाब्दसाधनतान्वयः[12] इति स्वर्गकामादिवाक्ये क्लृप्तविशेषन्यायस्य बलीयस्त्वात्[13] "अश्वेन जिगमिषति, असिना जिघांसति" इत्यादिलौकिकप्रयोगे अश्वादिरूपसाधनस्य "तदन्वेष्टव्यम्, तद्वाव विजिज्ञासितव्यम्"[14] "मन्तव्यो निदिध्यासितव्यः"[15] इत्यादिवैदिकप्रयोगे तव्यार्थभूतविधेश्च[16] सन्प्रत्ययाभिहितेच्छाविषये एव गमनादावन्वयस्य व्युत्पन्नत्वाच्च प्रकृत्यभिहितायां विद्यायां यज्ञादीनां विनियोगः। 1·2

"ननु तथा सति यावद्विद्योदयं कर्मानुष्ठानापत्तेः[17] 'त्यजतैव हि तज्ज्ञेयम्' इत्यादिश्रुतिसिद्धं कर्मत्यागरूपस्य संन्यासस्य विद्यार्थत्वं पीडयेत" इति चेत्, न। प्राग् बीजावापात् कर्षणम्, तदनन्तरमकर्षणमिति कर्षणाकर्षणाभ्यां व्रीह्यादिनिष्पत्तिवत् 1·21

"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥"[18]

इत्यादिवचनानुसारेण चेतसः शुद्धौ[19] विविदिषादिरूपप्रत्यक्प्रावण्योदयपर्यन्तं कर्मानुष्ठानम्, ततः संन्यास इति कर्मतत्संन्यासाभ्यां विद्यानिष्पत्त्यभ्युपगमात्। उक्तं हि नैष्कर्म्यसिद्धौ[20]

"प्रत्यक्प्रवणतां बुद्धेः कर्माण्यापाद्य शुद्धितः।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव॥"

इति। कर्मणां विद्यार्थत्वपक्षेऽपि विविदिषापर्यन्तमेव कर्मानुष्ठाने विविदिषार्थत्वपक्षात् को भेद इति चेत्, अयं भेदः—कर्मणां विद्यार्थत्वपक्षे द्वारभूतविविदिषासिद्ध्यनन्तरमुपरतावपि फलपर्यन्तानि विशिष्टगुरुलाभान्निर्विघ्नश्रवणमनननिदिध्यासनसाधनानि[21] निवृत्तिप्रमुखानि सम्पाद्य विद्योत्पादकत्वनियमोऽस्ति; विविदिषार्थत्वपक्षे तु श्रवणादिप्रवृत्तिजननसमर्थोत्कटेच्छासम्पादनमात्रेण कृतार्थतेति नावश्यं विद्योत्पादकत्वनियमः; "यस्यैतेऽष्टाचत्वारिंशत् संस्काराः"[22] इति

स्मृतिमूले कर्मणामात्मज्ञानयोग्यतापादकमलापकर्षणगुणाधानलक्षणसंस्कारार्थत्वपक्षे इव—इति वदन्ति।

1·3 ननु केषां कर्मणामय[23] मुदाहृतश्रुत्या विनियोगो बोध्यते?

1·31 अत्र कैश्चिदुक्तम्—"वेदानुवचनेन" इति ब्रह्मचारिधर्माणाम्, "यज्ञेन दानेन" इति गृहस्थधर्माणाम्, "तपसानाशकेन" इति वानप्रस्थधर्माणां चोपलक्षणमित्याश्रमधर्माणामेव विद्योपयोगः। अत एव "विहितत्वाच्चाश्रमकर्मापि"[24] इति शारीरकसूत्रे विद्यार्थकर्मस्वाश्रमकर्मपदप्रयोगः—इति।

1·321 कल्पतरौ[25] तु—नाश्रमधर्माणामेव विद्योपयोगः; "अन्तरा चापि तु तद्दृष्टेः"[26] इत्यधिकरणे आश्रमरहितविधुराद्यनुष्ठितकर्मणामपि विद्योपयोगनिरूपणात्। न च "विधुरादीनामनाश्रमिणां प्राग्जन्मानुष्ठितयज्ञाद्युत्पादित[27] विविदिषाणां विद्यासाधनश्रवणादावधिकारनिरूपणमात्रपरं तदधिकरणम्, न तु तदनुष्ठितकर्मणां विद्योपयोगनिरूपणपरम्" इति शङ्क्यम्; "विशेषानुग्रहश्च"[28] इति तदधिकरणसूत्रतद्भाष्ययोस्तदनुष्ठितानां जपादिरूपवर्णमात्रधर्माणामपि विद्योपयोगस्य कण्ठतोक्तेः; "विहितत्वाच्चाश्रमकर्मापि"[24] इति सूत्रे आश्रमपदस्य[29] वर्णधर्माणामप्युपलक्षणत्वात् इत्यभिप्रायेणोक्तम्[30] "आश्रमधर्मव्यतिरिक्तानामप्यस्ति विद्योपयोगः, किं तु नित्यानामेव; तेषां हि फलं दुरितक्षयं विद्यापेक्षते, न काम्यानां फलं स्वर्गादि"। तत्र यथा प्रकृतौ क्लृप्तोपकाराणामङ्गानामतिदेशे सति न प्रकृतोपकारातिरिक्तोपकारकल्पनं एवं ज्ञाने विनियुक्तानां यज्ञादीनां क्लृप्तनित्यफलपापक्षयातिरेकेण न नित्यकाम्यसाधारणविद्योपयोग्युपकारकल्पनम्—इति।

1·322 संक्षेपशारीरके[31] तु नित्यानां काम्यानां च कर्मणां विनियोग उक्तः, यज्ञादिशब्दाविशेषात्। प्रकृतौ क्लृप्तोपकाराणां पदार्थानां क्लृप्तप्राकृतोपकारातिदेशमुखेनैव विकृतिष्वतिदेशेन सम्बन्धः, न तु पदार्थानामतिदेशानन्तरमुपकारकल्पनेति न तत्र प्राकृतोपकारातिरिक्तोपकारकल्पनाप्रसक्तिः; इह तु प्रत्यक्षश्रुत्या प्रथममेव विनियुक्तानां यज्ञादीनामुपदिष्टानामङ्गानामिव[32] पश्चात्

कल्पनीय उपकारः प्रथमावगतविनियोगनिर्वाहायाक्लृप्तोऽपि सामान्यशब्दोपात्त-सकलनित्यकाम्यसाधारणः कथं न कल्प्यः? अध्वरेषु[33] अध्वरमीमांसकैरपि हि उपकारमुखेन पदार्थान्वये एव क्लृप्तोपकारनियमः, पदार्थान्वयानन्तरमुप-कारकल्पने[34] त्वक्लृप्तोऽपि विनियुक्तपदार्थानुगुण एवोपकारः कल्पनीय इति संप्रतिपद्यैव बाधलक्षणारम्भसिद्धयर्थमुपकारमुखेन विकृतिषु प्राकृतान्वयो दशमाद्ये समर्थितः। किं च क्लृप्तोपकारालाभान्नित्यानामेवायं विनियोग इत्यभ्युपगमे नित्येभ्यो दुरितक्षयस्य तस्माच्च ज्ञानोत्पत्तेरन्यतः सिद्धौ व्यर्थोऽयं विनियोगः। अन्यतस्तदसिद्धौ ज्ञानापेक्षितोपकारजनकत्वं[35] नित्येष्वक्लृप्त-मित्यविशेषान्नित्यकाम्यसाधारणविनियोगो दुर्वारः। "ननु नित्यानां दुरित-क्षयमात्रहेतुत्वस्यान्यतः सिद्धावपि विशिष्य ज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवर्त-कत्वं[36] न सिद्धम्, किं त्वस्मिन् विनियोगे सति ज्ञानोद्देशेन नित्यानु-ष्ठानादवश्यं ज्ञानं भवति, इतरथा शुद्धिमात्रम्, न नियता ज्ञानोत्पत्तिरिति सार्थकोऽयं विनियोगः" इति चेत्, तर्हि नित्यानामप्यक्लृप्तमेव ज्ञानोत्पत्ति-प्रतिबन्धकदुरितनिबर्हणत्वम्; ज्ञानसाधनविशिष्टगुरुलाभश्रवणमननादिसम्पादका-पूर्वं च द्वारं कल्पनीयमित्यक्लृप्तोपकारकल्पनाविशेषान्न सामान्यश्रुत्यापादितो नित्यकाम्यसाधारणो विनियोगो भञ्जनीयः—इति।

"नन्वेवमपि कथम् 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः'[37] 1·41
इत्यादिस्मरणनिर्वाहः? न च तस्य विद्यार्थकर्मानुष्ठानपरत्वम्, विविदिषावाक्ये ब्राह्मणग्रहणेन ब्राह्मणानामेव विद्यार्थकर्मण्यधिकारप्रतीतेः। अतो जनकाद्यनु-ष्ठितकर्मणां साक्षादेव मुक्त्युपयोगो वक्तव्यः"। मैवम्; विविदिषावाक्ये ब्राह्मण-ग्रहणस्य त्रैवर्णिकोपलक्षणत्वात्। यथाहुरत्रभवन्तो वार्तिककाराः

"ब्राह्मणग्रहणं चात्र द्विजानामुपलक्षणम्।
अविशिष्टाधिकारित्वात्सर्वेषामात्मबोधने॥"[38]

इति। न हि विद्याकामो यज्ञादीननुतिष्ठेद् इति विपरिणमिते विद्याकामाधिकार-विधौ ब्राह्मणपदस्याधिकारिविशेषसमर्पकत्वं युज्यते, उद्देश्ये विशेषणायोगात्।

नापि "राजा स्वाराज्यकामो राजसूयेन यजेत" इति स्वाराज्यकामाधिकारे राजसूयविधौ स्वाराज्यकामो राजकर्तृकेण राजसूयेन यजेतेति कर्तृतया यागविशेषणत्वेन विधेयस्य राज्ञो राजकर्तृकराजसूयस्याराज्ञा संपादयितुमशक्यत्वाद् अर्थादधिकारिकोटिनिवेशवद् इह यज्ञादिकर्तृतया विधेयस्य ब्राह्मणस्यार्थादधिकारिकोटिनिवेश इति युज्यते; "सर्वथापि त एवोभयलिङ्गात्" इति सूत्रे [39] अन्यत्र विहितानामेव यज्ञादीनां विविदिषावाक्ये फलविशेषसम्बन्धविधिः नापूर्वयज्ञादिविधिरिति व्यवस्थापितत्वेन प्राप्तयज्ञाद्यनुवादेनैकस्मिन् वाक्ये कर्तृरूपगुणविधिः फलसम्बन्धविधिश्चेत्युभयविधानाद् [40] वाक्यभेदापत्तेः।

नापि राजसूयवाक्ये राज्ञः कर्तृतया विधेयत्वाभावपक्षे राजपदसमभिव्याहारमात्राद्विशिष्टकर्तृत्वलाभवद् इह वाक्याभेदाय कर्तृतया ब्राह्मणाविधानेऽपि ब्राह्मणपदसमभिव्याहारमात्रेण ब्राह्मणकर्तृकत्वलाभात् तदधिकारपर्यवसानमित्युपपद्यते; अन्यत्र त्रैवर्णिकाधिकारिकत्वेन क्लृप्तानामिहापि त्रैवर्णिकाधिकारात्मविद्यार्थत्वेन विधीयमानानां यज्ञादीनां त्रैवर्णिकाधिकारित्वस्य युक्ततया विधिसंसर्गहीन [41] ब्राह्मणपदसमभिव्याहारमात्रादधिकारसंकोचासम्भवेन, [42] ब्राह्मणपदस्य यथाप्राप्तविद्याधिकारिमात्रोपलक्षणत्वौचित्यात्।

1·421 "ननु विद्याधिकारिमात्रोपलक्षणत्वे शूद्रस्यापि विद्यायामर्थित्वादिसम्भवेन तस्यापि विद्यार्थकर्माधिकारप्रसङ्गः" इति चेत्, न; अध्ययनगृहीतस्वाध्यायजन्यतदर्थज्ञानवत एव वैदिकेष्वधिकार इत्यपशूद्राधिकरणे [43] अध्ययनवेदवाक्यश्रवणादिविधुरस्य शूद्रस्य विद्याधिकारनिषेधात्, "न शूद्राय मतिं दद्यात्" [44] इति स्मृतेरापाततोऽपि तस्य विद्यामहिमा [45] वगत्युपायासम्भवेन तदर्थित्वानुपपत्तेश्च तस्य विद्यायामनधिकारात्—इति केचित्।

1·422 अन्ये त्वाहुः—शूद्रस्याप्यस्त्येव विद्यार्थकर्माधिकारः; तस्य वेदानुवचनाग्निहोत्राद्यसम्भवेऽपि कण्ठोक्तसर्ववर्णाधिकारश्रीपञ्चाक्षरमन्त्रराजविद्यादिजपपापक्षयहेतुतपोदानपाकयज्ञादिसम्भवात्, वेदानुवचनेन यज्ञेन दानेनेत्यादिपृथक्करणविभक्तिश्रुतेर्विदुरादीनां विद्यार्थजपदानादिमात्रानुष्ठानानुमतेश्च वेदानुवचनादिसमुच्चयानपेक्षणात्।

न च शूद्रस्य विद्यायामर्थित्वासम्भवः । "श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः" इत्यादीतिहासपुराणश्रवणे चातुर्वर्ण्याधिकारस्मरणेन पुराणाद्यवगतविद्यामाहात्म्यस्य तस्यापि विद्यार्थित्वसम्भवात् । "न शूद्राय मतिं दद्यात्" इति स्मृतेस्तु[46] तदनुष्ठानानुपयोग्यग्निहोत्रादेकर्मज्ञान-दाननिषेधपरत्वात्; अन्यथा तस्य स्ववर्णधर्मस्याप्यवगत्युपायासम्भवेन "शूद्र-श्चतुर्थो वर्णः, एकजातिः, तस्यापि सत्यमक्रोधः शौचम्, आचमनार्थे पाणिपाद-प्रक्षालनमेवैके[47] श्राद्धकर्म, भृत्यभरणम्, स्वदारतुष्टिः,[48] परिचर्या चोत्तरेषाम्"[49] इत्यादितद्धर्मविभाजकवचनानामननुष्ठानलक्षणाप्रामाण्यापत्तेः ।

न चैवं सत्यपशूद्राधिकरणस्य निर्विषयत्वम्; तस्य "न शूद्रे पातकं किंचित् न च संस्कारमर्हति"[50] इतिस्मृतेर्गुरूपसदनाख्यविद्याङ्गोपनयनसंस्कार-विधुरस्य शूद्रस्य सगुणविद्यासु निर्गुणविद्यासाधनवेदान्तश्रवणादिषु चाधिकार-निषेधपरत्वात् निर्गुणविद्यायां शूद्रस्यापि विषयसौन्दर्यप्रयुक्तस्यार्थित्वस्य निषे-द्धुमशक्यत्वाद् अविधेयायां च तस्यां तदतिरिक्ताधिकाराप्रसक्त्या तन्नि-षेधायोगाच्च । न च तस्य वेदान्तश्रवणासम्भवे विद्यार्थकर्मानुष्ठानसम्भ-वेऽपि[51] विद्यानुत्पत्तेस्तस्य तदर्थकर्मानुष्ठानं व्यर्थमिति वाच्यम्; तस्य वेदान्तश्रवणाधिकाराभावेऽपि भगवत्पादैः[52] "'श्रावयेच्चतुरो वर्णान्' इति चेतिहासपुराणाधिगमे चातुर्वर्ण्याधिकारस्मरणाद् वेदपूर्वस्तु नास्त्यधिकारः शूद्राणामिति स्थितम्" इति अपशूद्राधिकरणोपसंहारभाष्ये ब्रह्मात्मैक्य-परपुराणादिश्रवणे विद्यासाधनेऽधिकारस्य दर्शितत्वात् । विद्योत्पत्तियोग्यविमल-देवशरीरनिष्पादनद्वारा मुक्त्यर्थं[53] भविष्यतीति त्रैवर्णिकानां क्रममुक्तिफलक-सगुणविद्यानुष्ठानवद्[54] वेदान्तश्रवणयोग्यत्रैवर्णिकशरीरनिष्पादनद्वारा विद्या-र्थत्वं[55] भविष्यतीति शूद्रस्य विद्यार्थकर्मानुष्ठानाविरोधाच्च । तस्माद्विविदिषा-वाक्ये ब्राह्मणपदस्य यथाप्राप्तविद्याधिकारिमात्रोपलक्षणत्वेन[56] शूद्रस्यापि विद्या-र्थकर्माधिकारः सिध्यत्येव—इति ।

ननु, अस्तु कर्मणां चित्तशुद्धिद्वारा विद्योपयोगः; संन्यासस्य किंद्वारा तदुपयोगः? 2·0

2·11 केचिदाहुः—विद्योत्पत्तिप्रतिबन्धकदुरितानामनन्तत्वात् किञ्चिद् यज्ञाद्यनुष्ठाननिवर्त्यम्, किञ्चित् संन्यासापूर्वनिवर्त्यमिति कर्मवच्चित्तशुद्धिद्वारैव संन्यासस्यापि तदुपयोगः। तथा च गृहस्थादीनां कर्मच्छिद्रेषु श्रवणाद्यनुतिष्ठतां न तस्मिन् जन्मनि विद्यावाप्तिः, किं तु जन्मान्तरे संन्यासं लब्ध्वैव; येषां तु गृहस्थानामेव सतां जनकादीनां विद्या दृश्यते, तेषां पूर्वजन्मनि संन्यासाद्विद्यावाप्तिः। अतो न विद्यायां संन्यासापूर्वव्यभिचारशङ्कापि—इति।

2·12 अन्ये तु—"शान्तो दान्त उपरतः" इत्यादिश्रुतौ[57] उपरतशब्दगृहीततया संन्यासस्य साधनचतुष्टयान्तर्गतत्वात्, "सहकार्यन्तरविधिः"[58] इति सूत्रभाष्ये "तद्वतो विद्यावतः संन्यासिनः" बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं विधीयते, "तस्माद् ब्राह्मणः पाण्डित्यम्"[59] इत्यादिश्रुतौ ततः प्राक् "भिक्षाचर्यं चरन्ति"[59] इति संन्यासाधिकाराद् इति प्रतिपादनात्,

"त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता॥"[60]

इति वार्तिकोक्तेश्च, संन्यासापूर्वस्य विद्यासाधनवेदान्तश्रवणाद्यधिकारिविशेषणत्वम्—इति तस्य विद्योपयोगमाहुः।

2·13 अपरे तु—श्रवणाद्यङ्गतयात्मज्ञानफलता[61] संन्यासस्य सिद्धेति विवरणोक्तेरनन्यव्यापारतया श्रवणादिनिष्पादनं कुर्वतस्तस्य विद्यायामुपयोगः, दृष्टद्वारे सम्भवति अदृष्टकल्पनायोगात्। यदि त्वनलसस्य धीमतः पुरुषधौरेयस्याश्रमान्तरस्थस्यापि कर्मच्छिद्रेषु श्रवणादि सम्पद्यते, तदा चतुर्ष्वाश्रमेषु संन्यासाश्रमपरिग्रहेणैव श्रवणादि निर्वर्तनीयम् इति नियमोऽभ्युपेयः—इति।

2·14 नन्वस्मिन् पक्षद्वये क्षत्रियवैश्ययोः कथं वेदान्तश्रवणाद्यनुष्ठानम्, संन्यासस्य ब्राह्मणाधिकारिकत्वात्, "ब्राह्मणो निर्वेदमायात्" "ब्राह्मणो व्युत्थाय" "ब्राह्मणः प्रव्रजेत्" इति संन्यासविधिषु ब्राह्मणग्रहणात्,

"अधिकारिविशेषस्य ज्ञानाय ब्राह्मणग्रहः।
न संन्यासविधिर्यस्माच्छ्रुतौ क्षत्रियवैश्ययोः॥"[62]

इति वार्तिकोक्तेश्च ? इति चेत्,

अत्र केचित्—"यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा"[63] 2·141
इत्यविशेषश्रुत्या,

"ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहात् ।
त्रयाणामपि वर्णानाममी चत्वार आश्रमाः ॥"[64]

इतिस्मृत्यनुगृहीततया क्षत्रियवैश्ययोरपि संन्यासाधिकारसिद्धेः श्रुत्यन्तरेषु ब्राह्मणग्रहणं त्रयाणामुपलक्षणम् । अत एव वार्तिकेऽपि "अधिकारिविशेषस्य" इतिश्लोकेन भाष्याभिप्रायमुक्त्वा

"त्रयाणामविशेषेण संन्यासः श्रूयते श्रुतौ ।
यदोपलक्षणार्थं स्याद्ब्राह्मणग्रहणं तदा ॥"[65]

इत्यनन्तरश्लोकेन स्वमते[66] क्षत्रियवैश्ययोरपि संन्यासाधिकारो दर्शितः—इति तयोः श्रवणाद्यनुष्ठानसिद्धिं समर्थयन्ते ।

अन्ये तु—अनेकेषु संन्यासविधिवाक्येषु ब्राह्मणग्रहणात्, उदाहृत- 2·142
जाबालश्रुतौ संन्यासविधिवाक्ये ब्राह्मणग्रहणाभावेऽपि श्रुत्यन्तरसिद्धं ब्राह्मणाधिकारमेव सिद्धं कृत्वा "संन्यासावस्थायामयज्ञोपवीती कथं ब्राह्मणः" इति ब्राह्मणपरामर्शाच्च ब्राह्मणस्यैव संन्यासाधिकारः; विरोधाधिकरणन्यायेन[67] श्रुत्यविरुद्धस्यैव स्मृत्यर्थस्य ग्राह्यत्वात् । यत्तु संन्यासस्य सर्वाधिकारित्वे वार्तिकवचनम्, तत् विद्वत्संन्यासविषयम्, न त्वातुरविविदिषासंन्यासे भाष्याभिप्रायविरुद्धसर्वाधिकारप्रतिपादनपरम्;

"सर्वाधिकारविच्छेदि ज्ञानं चेदभ्युपेयते[68] ।
कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात् ॥"

इत्यनन्तरश्लोकेन ब्रह्मज्ञानोदयानन्तरं जीवन्मुक्तेन क्रियमाणे[69] विद्वत्संन्यासे एवाधिकारनियमनिराकरणात् । एवं च ब्राह्मणानामेव श्रवणाद्यनुष्ठाने संन्यासोऽङ्गम्, क्षत्रियवैश्ययोस्तन्निरपेक्षः श्रवणाद्यधिकार इति तयोः श्रवणाद्यनुष्ठाननिर्वाहः । न हि संन्यासस्य श्रवणापेक्षितत्वपक्षे श्रवणमात्रस्य तदपेक्षा नियन्तुं शक्यते; क्रममुक्तिफलकसगुणोपासनया देवभावं प्राप्तस्य श्रवणादौ संन्यासनैरपेक्ष्यस्या-

वश्यं वक्तव्यत्वात्; देवानां कर्मानुष्ठानाप्रसक्त्या तत्त्यागरूपस्य संन्यासस्य तेष्वसम्भवात्—इत्याहुः ।

2·143 अपरे तु—“ब्रह्मसंस्थोऽमृतत्वमेति”[70] इतिश्रुत्युदिता यस्य ब्रह्मणि संस्था, समाप्तिः, अनन्यव्यापारत्वरूपं तन्निष्ठत्वम्, तस्य श्रवणादिषु मुख्योऽधिकारः;

“गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
न विचारपरं चेतो यस्यासौ मृत उच्यते ॥”

“आ सुप्तेरा मृतेः कालं नयेद्वेदान्तचिन्तया” इत्यादिस्मृतिषु सर्वदा विचार-विधानात् । सा च ब्रह्मणि संस्था विना संन्यासमाश्रमान्तरस्थस्य न सम्भवति, स्वस्वाश्रमविहितकर्मानुष्ठानवैयग्र्यादिति संन्यासरहितयोः क्षत्रियवैश्ययोर्न मुख्यः श्रवणाद्यधिकारः । किं तु “दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणाप्यर्थिनमधि-करोति श्रवणादिषु”[71] इति “अन्तरा चापि तु तद्दृष्टेः”[72] इत्यधिकरण-भाष्योक्तन्यायेन शूद्रवदप्रतिषिद्धयोस्तयोर्विधुरादीनामिव देहान्तरे विद्याप्रापकेणा-मुख्याधिकारमात्रेण श्रवणानुमतिः । न हि “अन्तरा चापि तु तद्दृष्टेः”[72] इत्यधिकरणे विधुरादीनामनाश्रमिणाम्[73] अङ्गीकृतश्श्रवणाद्यधिकारो मुख्य इति वक्तुं शक्यते; “अतस्त्वितरज्ज्यायो लिङ्गाच्च”[74] इतिसूत्रकारेणैव तेषाम-मुख्याधिकारस्फुटीकरणात् । न च “तत्र तेषां श्रवणाधिकार एव नोक्तः, किं तु तदीयकर्मणां विद्यानुग्राहकत्वम्” इति शङ्क्यम्; “दृष्टार्था च विद्या” इत्युदाहृततदधिकरणभाष्यविरोधात् । न च “क्षत्रियवैश्ययोः संन्यासाभावाद् अमुख्याधिकारे तत एव देवानामपि श्रवणादिष्वमुख्य एवाधिकारः स्यात्, तथा च क्रममुक्तिफलकसगुणविद्यया देवभावं प्राप्य श्रवणाद्यनुतिष्ठतां विद्या-प्राप्त्यर्थं संन्यासार्हं पुनर्ब्राह्मणजन्म वक्तव्यमिति, ‘ब्रह्मलोकमभिसम्पद्यते, न स पुनरावर्तते’[75] ‘अनावृत्तिश्शब्दात्’[76] इत्यादिश्रुतिसूत्रविरोधः” इति वाच्यम्; देवानामनुष्ठेयकर्मवैयग्र्याभावात् स्वत एवानन्यव्यापारत्वं सम्भवतीति क्रममुक्तिफलकसगुणविद्याविधायि[77]-शास्त्रप्रामाण्याद्विनापि संन्यासं तेषां मुख्याधि-कारसंभवात्[78]—इत्याहुः ।

नन्वमुख्याधिकारिणा दृष्टफलभूतवाक्यार्थावगत्यर्थमविहितशास्त्रान्तर- 2·1431
विचारवत् क्रियमाणो वेदान्तविचारः कथं जन्मान्तरीयविद्यावाप्तावुपयुज्यते? न खल्वद्यतनविचारस्य दिनान्तरीयविचार्यावगतिहेतुत्वमपि युज्यते, दूरे जन्मान्तरीयतद्धेतुत्वम्।

न च वाच्यम् "मुख्याधिकारिणा परिव्राजकेन क्रियमाणमपि श्रवणं दृष्टार्थमेव, अवगतेः[79] दृष्टफलत्वात्, तस्य यथा प्रारब्धकर्मविशेषरूपप्रतिबन्धादिह जन्मनि फलमजनयतो जन्मान्तरे प्रतिबन्धकापगमेन फलजनकत्वम्, 'ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्'[80] इत्यधिकरणे तथा निर्णयात्, एवममुख्याधिकारिकृतस्यापि स्यात्" इति; यतश्शास्त्रीयाङ्गयुक्तं श्रवणमपूर्वविधित्वपक्षे फलपर्यन्तमपूर्वम्, नियमविधित्वपक्षे नियमादृष्टं वा जनयति, तच्च जातिस्मरत्वप्रापकादृष्टवत् प्राग्भवीयसंस्कारमुद्बोध्य तन्मूलभूतस्य विचारस्य जन्मान्तरीयविद्योपयोगितां घटयतीति युज्यते, शास्त्रीयाङ्गविधुरं श्रवणं नादृष्टोत्पादकमिति कुतस्तस्य जन्मान्तरीयविद्योपयोगित्वमुपपद्यते, घटकादृष्टं विना जन्मान्तरीयप्रमाणव्यापारस्य जन्मान्तरीयावगतिहेतुत्वोपगमे अतिप्रसङ्गात्?

उच्यते। अमुख्याधिकारिणाप्युत्पन्नविविदिषेण क्रियमाणं श्रवणं द्वार- 2·1432
भूतविविदिषोत्पादकप्राचीनविद्यार्थयज्ञाद्यनुष्ठानजन्यापूर्वप्रयुक्तमिति तदेवापूर्वं विद्यारूपफलपर्यन्तं व्याप्रियमाणं जन्मान्तरीयायामपि विद्यायां स्वकारितश्रवणस्योपकारकतां घटयतीति नानुपपत्तिः। श्रवणादौ विध्यभावपक्षे तु संन्यासपूर्वकं कृतस्यापि श्रवणस्यादृष्टानुत्पादकत्वात् सति प्रतिबन्धे[81] तस्य जन्मान्तरीयविद्याहेतुत्वमित्थमेव निर्वाह्यम्।

आचार्यास्तु—नियमविधिपक्षेऽप्ययमेव निर्वाहः; श्रवणमभ्यस्यतः 2·1433
फलप्राप्तेरर्वाक् प्रायेण तन्नियमादृष्टस्यानुत्पत्तेः, तस्य फलपर्यन्तावृत्तिगुणकश्रवणानुष्ठाननियमसाध्यत्वात्। न हि नियमादृष्टजनकः श्रवणनियमः फलपर्यन्तमावर्तनीयस्य श्रवणस्योपक्रममात्रेण निर्वर्तितो भवति, येन तज्जन्यनियमादृष्टस्यापि फलपर्यन्तश्रवणावृत्तेः प्रागेवोत्पत्तिः सम्भाव्येत; अवघातवदावृत्तिगुणकस्यैव

श्रवणस्य फलसाधनत्वेन फलसाधनपदार्थनिष्पत्तेः प्राक् तन्नियमनिर्वर्तिवचनस्य निरालम्बनत्वात्, श्रवणावघाताद्युपक्रममात्रेण नियमनिष्पत्तौ तावतैव नियमशास्त्रानुष्ठानं सिद्धमिति तदनावृत्तावप्यवैकल्यप्रसङ्गाच्च—इत्याहुः ।

2·144 केचित्तु—दृष्टार्थस्यापि श्रवणस्य [82]—

"दिने दिने तु वेदान्तश्रवणाद्भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं लभेत् ॥"

इत्यादिवचनप्रामाण्यात् स्वतन्त्रादृष्टोत्पादकत्वमप्यस्ति; यथा अग्निसंस्कारार्थस्याधानस्य पुरुषसंस्कारेषु परिगणनात् तदर्थत्वमपि, एवं वचनबलादुभयार्थत्वोपपत्तेः । तथा च प्रतिदिनश्रवणजनितादृष्टमहिम्नैवामुष्मिकविद्योपयोगित्वं श्रवणमननादिसाधनानाम्—इत्याहुः ।

3·0 एवं श्रवणमननादिसाधनानुष्ठानप्रणाल्या [83] विद्यावाप्तिरित्यस्मिन्नर्थे सर्वसम्प्रतिपन्ने स्थिते भारतीतीर्थाः ध्यानदीपे [84] विद्यावाप्तावुपायान्तरमप्याहुः । "तत् कारणं साङ्ख्ययोगाभिपन्नम्" [85], "यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते" [86] इतिश्रुतिस्मृतिदर्शनात् यथा साङ्ख्यं नाम वेदान्तविचारः श्रवणशब्दितो मननादिसहकृतो विद्यावाप्त्युपायः, एवं योगशब्दितं निर्गुणब्रह्मोपासनमपि । न च निर्गुणस्योपासनमेव नास्तीति शङ्क्यम्; प्रश्नोपनिषदि शैब्यप्रश्ने [87] "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" इति निर्गुणस्यैवोपासनाप्रतिपादनात्; तदनन्तरम् "स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते" इति उपासनाफलवाक्ये ईक्षतिकर्मत्वेन निर्दिष्टं यन्निर्गुणं ब्रह्म तदेवोपासनावाक्येऽपि ध्यायतिकर्म, नान्यत्, ईक्षतिध्यानयोः कार्यकारणभूतयोरेकविषयत्वनियमाद् इत्यस्यार्थस्येक्षतिकर्माधिकरणे [88] भाष्यकारादिभिरङ्गीकृतत्वात्; अन्यत्रापि तापनीयकठवल्ल्यादिश्रुत्यन्तरे निर्गुणोपास्तेः प्रपञ्चितत्वात् ।

सूत्रकृताप्युपास्यगुणपरिच्छेदार्थमारब्धे गुणोपसंहारपादे निर्गुणेऽपि "आनन्दादयः प्रधानस्य" [89] इतिसूत्रेण भावरूपाणां ज्ञानानन्दादिगुणानाम्,

"अक्षरधियां त्ववरोधः"[90] इत्यादिसूत्रेण अभावरूपाणामस्थूलत्वादिगुणानां चोपसंहारस्य दर्शितत्वाच्च ।

"नन्वानन्दादिगुणोपसंहारे उपास्यं निर्गुणमेव न स्यात्" इति चेत्, न; आनन्दादिभिरस्थूलत्वादिभिश्चोपलक्षितमखण्डैकरसं ब्रह्मास्मीति निर्गुणत्वानुपमर्दनोपासनासम्भवात्[91] ।

"ननु 'तदेव ब्रह्म त्वं विद्धि, नेदं यदिदमुपासते'[92] इतिश्रुतेः न परं ब्रह्मोपास्यम्" इति चेत्, न; "अन्यदेव तद्विदितात्[93]" इति श्रुतेस्तस्य वेद्यत्वस्याप्यसिद्ध्यापातात् । श्रुत्यन्तरेषु ब्रह्मवेदनप्रसिद्धेरवेद्यत्वश्रुतिर्वास्तवावेद्यत्वपरा[94] चेत्, आथर्वणादौ तदुपासनाप्रसिद्धेस्तदनुपास्यत्वश्रुतिरपि वस्तुवृत्तपरास्तु । एवं च "श्रवणायापि बहुभिर्यो न लभ्यः"[95] इतिश्रवणात्, येषां बुद्धिमान्द्यात् न्यायव्युत्पादनकुशलविशिष्टगुर्वलाभाद्वा श्रवणादि न सम्भवति[96] तेषामध्ययनगृहीतैर्वेदान्तैरापाततोऽधिगमितब्रह्मात्मभावानां तद्विचारं विनैव प्रश्नोपनिषदाद्युक्तमार्षग्रन्थेषु ब्राह्मवासिष्ठादिकल्पेषु पञ्चीकरणादिषु[97] चानेकशाखाविप्रकीर्णसर्वार्थोपसंहारेण कल्पसूत्रेष्वग्निहोत्रादिवन्निर्धारितानुष्ठानप्रकारं निर्गुणोपासनं सम्प्रदायमात्रविद्भ्यो गुरुभ्योऽवधार्य तदनुष्ठानात् क्रमेणोपास्यभूतनिर्गुणब्रह्मसाक्षात्कारः सम्पद्यते; अविसंवादिभ्रमन्यायेन उपास्तेरपि क्वचित् फलकाले प्रमापर्यवसानसम्भवात्; पाणौ पञ्च वराटकाः पिधाय केनचित् "करे कति वराटकाः ?" इति पृष्टे "पञ्च वराटकाः" इति तदुत्तरवक्तुर्वाक्यप्रयोगमूलभूतसङ्ख्याविशेषज्ञानस्य मूलप्रमाणशून्यस्याहार्यारोपरूपस्यापि यथार्थत्ववन्निर्गुणब्रह्मोपासनस्यार्थतथात्वविवेचकनिर्विचिकित्समूलप्रमाणनिरपेक्षस्य, दहराद्युपासनावद्[98] उपासनाशास्त्रमात्रमवलम्ब्य क्रियमाणस्यापि वस्तुतो यथार्थत्वेन दहराद्युपासनेनेव निर्गुणोपासनेन जन्यस्य स्वविषयसाक्षात्कारस्य श्रवणादिप्रणाल्या जन्यसाक्षात्कारवदेव तत्त्वार्थविषयत्वावश्यंभावाच्च । इयांस्तु विशेषः; प्रतिबन्धरहितस्य पुंसः श्रवणादिप्रणाल्या ब्रह्मसाक्षात्कारो झटिति सिध्यतीति साङ्ख्यमार्गो मुख्यः कल्पः, उपास्त्या तु विलम्बेनेति योगमार्गोऽनुकल्पः—इति ।

4·0 नन्वस्मिन् पक्षद्वयेऽपि ब्रह्मसाक्षात्कारे किं करणम् ?

4·1 केचिदाहुः—प्रत्ययाभ्यासरूपं प्रसङ्ख्यानमेव । योगमार्गे आदित आरभ्योपासनारूपस्य साङ्ख्यमार्गे मननानन्तरनिदिध्यासनरूपस्य च तस्य सत्त्वात् । न च तस्य ब्रह्मसाक्षात्कारकरणत्वे मानाभावः; "ततस्तु तं पश्यते निष्कलं ध्यायमानः"[99] इतिश्रवणात्, कामातुरस्य व्यवहितकामिनीसाक्षात्कारे प्रसङ्ख्यानस्य करणत्वक्लृप्तेश्च; "आ प्रायणात् तत्रापि हि दृष्टम्" इत्यधिकरणे[100], "विकल्पोऽविशिष्टफलत्वात्" इत्यधिकरणे[101] च दहराद्यहंग्रहोपासकानां प्रसङ्ख्यानादुपास्यसगुणब्रह्म-[102] साक्षात्काराङ्गीकाराच्च ।

4·11 ननु च प्रसङ्ख्यानस्य प्रमाकरणेषु[103] अपरिगणनात् तज्जन्यो ब्रह्मसाक्षात्कारः प्रमा न स्यात् । न च काकतालीयसंवादिवराटकसङ्ख्याविशेषाहार्यज्ञानवदर्थाबाधेन प्रमात्वोपपत्तिः; प्रमाणामूलकस्य प्रमात्वायोगात्; आहार्यवृत्तेश्चोपासनावृत्तिवज्ज्ञानभिन्नमानसक्रियारूपतयेच्छादिवदबाधितार्थविषयत्वेऽपि प्रमात्वानभ्युपगमात् ।

4·12 मैवम्; क्लृप्तप्रमाकरणामूलकत्वेऽपीश्वरमायावृत्तिवत् प्रमात्वोपपत्तेः, विषयाबाधतौल्यात्, मार्गद्वयेऽपि प्रसङ्ख्यानस्य विचारितादविचारिताद्वा वेदान्ताद्ब्रह्मात्मैक्यावगममूलकतया प्रसङ्ख्यानजन्यस्यापि[104] ब्रह्मसाक्षात्कारस्य प्रमाणमूलकत्वाच्च । उक्तं हि कल्पतरुकारैः[105]

"वेदान्तवाक्यजज्ञानभावनाजापरोक्षधीः ।
मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते ॥"

न च प्रामाण्यपरतस्त्वापत्तिः, अपवादनिरासाय मूलशुद्ध्यनुरोधात्[106] ।

4·2 अन्ये तु—"एषोऽणुरात्मा चेतसा वेदितव्यः"[107], "दृश्यते त्वग्र्यया बुद्ध्या"[108] इत्यादिश्रुतेर्मन एव ब्रह्मसाक्षात्कारे करणम्, तस्य सोपाधिकात्मन्यहंवृत्तिरूपप्रमाकरणत्वक्लृप्तेः; "स्वप्नप्रपञ्चविपरीतप्रमात्रादिज्ञानसाधनस्यान्तःकरणस्य" इत्यादिपञ्चपादिकाविवरणग्रन्थेनापि तथा प्रतिपादनात्; "अहमेवेदं सर्वम् ,सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः"[109] इति-

श्रुत्युक्ते स्वाप्ने ब्रह्मसाक्षात्कारे एव मनसः करणत्वसम्प्रतिपत्तेश्च, तदा करणान्तराभावात् । प्रसङ्ख्यानं तु मनस्सहकारिभावेनोपयुज्यते; "वाक्यार्थभावनापरिपाकसहितमन्तःकरणं त्वंपदार्थस्यापरोक्षस्य तत्तदुपाध्याकारनिषेधेन तत्पदार्थतामाविर्भावयति"[110] इति भामतीवचनात्; "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः"[111] इति श्रुतावपि ज्ञानप्रसादशब्दितचित्तैकाग्र्यहेतुतयैव ध्यानोपादानात् ।[112] न तु प्रसङ्ख्यानं स्वयं करणम्, तस्य क्वचिदपि ज्ञानकरणत्वाक्लृप्तेः; कामातुरकामिनीसाक्षात्कारादावपि प्रसङ्ख्यानसहकृतस्य मनस एव करणत्वोपपत्त्याक्लृप्तज्ञानकरणान्तरकल्पनायोगात्—इत्याहुः ।

अपरे तु—"तद्धास्य विजज्ञौ"[113] "तमसः पारं दर्शयति"[114] 4·६
"आचार्यवान् पुरुषो वेद, तस्य तावदेव चिरम्"[115] इत्यादिश्रुतिषु आचार्योपदेशानन्तरमेव ब्रह्मसाक्षात्कारोदये जीवन्मुक्तिश्रवणात्, "वेदान्तविज्ञानसुनिश्चितार्थाः"[116] इति[117] ध्यानान्तरनैराकाङ्क्ष्यश्रवणात्, "तं त्वौपनिषदं पुरुषम्"[118] इति ब्रह्मण उपनिषदेकगम्यत्वश्रवणाच्च औपनिषदं महावाक्यमेव ब्रह्मसाक्षात्कारे करणम्, न मनः; "यन्मनसा न मनुते"[119] इति तस्य ब्रह्मसाक्षात्कारकरणत्वनिषेधात् ।[120] न चापक्वमनोविषयमिदम्, "येनाहुर्मनो मतम्"[121] इति वाक्यशेषे मनोमात्रग्रहणात् ।

न चैवम् "यद्वाचानभ्युदितम्"[122] इति शब्दस्यापि तत्करणत्वं निषिध्यते इति शङ्क्यम्; मनःकरणत्ववादिनामपि शब्दस्य निर्विशेषे परोक्षज्ञानकरणत्वस्याभ्युपगतत्वेन तस्य "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"[123] इतिश्रुत्यनुरोधेन शब्दार्थप्राप्तिरूपशक्तिमुखेन शब्दस्य तत्करणत्वनिषेधे तात्पर्यस्य वक्तव्यतया शक्यसम्बन्धरूपलक्षणामुखेन तस्य तत्करणत्वाविरोधात् ।

न च "मनसैवानुद्रष्टव्यम्"[124] इतिश्रुतिसिद्धं मनसोऽपि तत्र करणत्वं न पराकर्तुं शक्यमिति वाच्यम्; शाब्दसाक्षात्कारजननेऽपि तदैकाग्र्यस्यापेक्षितत्वेन हेतुत्वमात्रेण तृतीयोपपत्तेः; "मनसा ह्येष पश्यति, मनसा

शृणोति" इत्यादौ तथा दर्शनात्; गीताविवरणे[125] भाष्यकारीयमनःकरणत्ववचनस्य मतान्तराभिप्रायेण प्रवृत्तेः—इत्याहुः ।

5·0 ननु तथापि शब्दस्य परोक्षज्ञानजनकस्वभावस्य नापरोक्षज्ञानजनकत्वं सङ्गच्छते । इति चेत्,

5·1 अत्र केचित्—स्वतोऽसमर्थोऽपि शब्दः शास्त्रीयश्रवणमननपूर्वकप्रत्ययाभ्यासजनितसंस्कारप्रचयलब्धब्रह्मैकाग्र्य[126]-चित्तदर्पणानुगृहीतोऽपरोक्षज्ञानमुत्पादयति, शास्त्रीयसंस्कारसंस्कृताग्न्यधिकरण[127] इव होमोऽपूर्वमिति कल्प्यते; "तरति शोकमात्मवित्"[128] इति शास्त्रप्रमाण्यात्; अपरोक्षस्य कर्तृत्वाद्यध्यासस्यापरोक्षाधिष्ठानज्ञानं विना निवृत्त्ययोगात्; औपनिषदे ब्रह्मणि मानान्तराप्रवृत्तेः, शब्दादप्यपरोक्षज्ञानानुत्पत्तौ अनिर्मोक्षप्रसङ्गात्—इत्याहुः ।

5·2 अन्ये तु भावनाप्रचयसाहित्ये सति बहिरसमर्थस्यापि मनसो नष्टवनितासाक्षात्कारजनकत्वदर्शनान्निदिध्यासनसाहित्येन शब्दस्याप्यपरोक्षज्ञानजनकत्वं युक्तमिति दृष्टानुरोधेन समर्थयन्ते ।

5·3 अपरे तु—अपरोक्षार्थविषयत्वं ज्ञानस्यापरोक्ष्यं[129] नाम, अन्यानिरुक्तेः। अर्थापरोक्षत्वं तु नापरोक्षज्ञानविषयत्वम् येनान्योन्याश्रयो भवेत्, किं तु तत्तत्पुरुषचैतन्याभेदः; अन्तःकरणतद्धर्माणां साक्षिणि कल्पिततया तदभेदसत्त्वात्, बाह्यचैतन्ये कल्पितानां घटादीनां बाह्यचैतन्ये वृत्तिकृततत्तत्पुरुषीयचैतन्याभेदाभिव्यक्त्या तदभेदसत्त्वाच्च न काप्यव्याप्तिः । न चान्तःकरणतद्धर्माणां ज्ञानादीनामिव धर्माधर्मसंस्काराणामपि साक्षिणि कल्पितत्वाविशेषादापरोक्ष्यापत्तिः, तेषामनुद्भूतत्वात्; उद्भूतस्यैव जडस्य चैतन्याभेद आपरोक्ष्यमित्यभ्युपगमात् । एवं च सर्वदा सर्वपुरुषचैतन्याभिन्नत्वात् "यत्साक्षादपरोक्षाद् ब्रह्म"[130] इतिश्रुत्या[131] स्वत एवापरोक्षं ब्रह्मेति अपरोक्षार्थविषयत्वात् शाब्दस्यापि ब्रह्मज्ञानस्यापरोक्षत्ववाचोयुक्तिर्युक्ता—इत्याहुः ।

5·4 अद्वैतविद्याचार्यास्तु—नापरोक्षार्थविषयत्वं ज्ञानस्यापरोक्ष्यम्, स्वरूपसुखापरोक्षरूपज्ञानाव्यापनात्, स्वविषयत्वलक्षणस्वप्रकाशत्वनिषेधात्; किं तु

यथा तत्तदर्थस्य स्वव्यवहारानुकूलचैतन्याभेदः[132] अर्थापरोक्ष्यम्, एवं तत्तद्व्यवहारानुकूलचैतन्यस्य तत्तदर्थाभेदो ज्ञानापरोक्ष्यम्। तथा च चैतन्यधर्म एवेदमापरोक्ष्यम्, न त्वनुमितित्वादिवद्[133] अन्तःकरणवृत्तिधर्मः। अत एव सुखादिप्रकाशरूपे साक्षिणि स्वरूपसुखप्रकाशरूपे चैतन्ये चापरोक्ष्यम्। न च घटाद्यैन्द्रियकवृत्तौ तदनुभवविरोधः; अनुभवस्य वृत्त्यवच्छिन्नचैतन्यगतापरोक्ष्यविषयत्वोपपत्तेः।

"ननु, उक्तं ज्ञानार्थयोरापरोक्ष्यं हृदयादिगोचरशाब्दवृत्तितद्विषययोरतिप्रसक्तम्; तत्र दैवात् कदाचिद् वृत्तिविषयसंसर्गे सति वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्यस्य चाभेदाभिव्यक्तेरवर्जनीयत्वात्" इति चेत्, न; परोक्षवृत्तेर्विषयावच्छिन्नचैतन्यगताज्ञाननिवर्तनाक्षमतया तत्राज्ञानेनावृतस्य विषयचैतन्यस्यानावृतेन वृत्त्यवच्छिन्नसाक्षिचैतन्येनाभेदाभिव्यक्तेरभावादापरोक्ष्याप्रसक्तेः। अत एव जीवस्य संसारदशायां वस्तुतस्सत्यपि ब्रह्माभेदे न तदापरोक्ष्यम्; अज्ञानावरणकृतभेदसत्त्वात्।

न चैवं ब्रह्मणोऽपि जीवापरोक्ष्यासम्भवादसर्वज्ञत्वापत्तिः, अज्ञानस्य ईश्वरं प्रत्यनावारकतया तं प्रति जीवभेदानापादनात्; यदज्ञानं यं प्रत्यावरकम्, तस्य तं प्रत्येव स्वाश्रयभेदापादकत्वात्। अत एव चैत्रज्ञानेन तस्य घटाज्ञाने निवृत्ते अनिवृत्तं मैत्राज्ञानं मैत्रं प्रत्येव विषयचैतन्यस्य भेदापादकमिति न चैत्रस्य घटापरोक्ष्यानुभवानुपपत्तिरिति।

"नन्वेवं वृत्तिविषयचैतन्याभेदाभिव्यक्तिलक्षणस्यापरोक्षत्वस्य स्वविषयचैतन्यगताज्ञाननिवृत्तिप्रयोज्यत्वे तस्याज्ञाननिवृत्तिप्रयोजकत्वायोगाद् ज्ञानमात्रमज्ञाननिवर्तकं भवेत्" इति चेत्, न; यद् ज्ञानमुत्पद्यमानं स्वकारणमहिम्ना विषयसंसृष्टमेवोत्पद्यते तदेवाज्ञाननिवर्तकमिति विशेषणात्, ऐन्द्रियकज्ञानानां तथात्वात्। एवं च शब्दादुत्पद्यमानमपि ब्रह्मज्ञानं सर्वोपादानभूतस्वविषयब्रह्मचैतन्यसंसृष्टमेव[134] उत्पद्यत इति तस्याज्ञाननिवर्तकत्वम्, अज्ञाननिवृत्तौ तन्मूलभेदप्रविलयादापरोक्ष्यं चेत्युपपद्यतेतराम्।

"नन्वेवमध्ययनगृहीतवेदान्तजन्येनापि तज्ज्ञानेन मूलाज्ञाननिवृत्त्या आपरोक्ष्यं किं न स्यात्? न च तत्सत्तानिश्चयरूपत्वाभावान्नाज्ञाननिवर्तकमिति

वाच्यम्; तथापि कृतश्रवणस्य निर्विचिकित्सशाब्दज्ञानेन तन्निवृत्त्या मननादिवैयर्थ्यापत्तिः" इति चेत्, न; सत्यपि श्रवणान्निर्विचिकित्सज्ञाने चित्तविक्षेपदोषेण प्रतिबन्धाद् अज्ञानानिवृत्त्या तन्निराकरणे मनननिदिध्यासननियमविध्यर्थानुष्ठानस्यार्थवत्त्वात्, भवान्तरीयमननाद्यनुष्ठाननिरस्तचित्तविक्षेपस्य उपदेशमात्राद् ब्रह्मापरोक्ष्यस्य इष्यमाणत्वाच्च—इत्याहुः।

6·1 अथैवमपि कृतनिदिध्यासनस्य वेदान्तजन्यब्रह्मज्ञानेनेव घटादिज्ञानेनापि ब्रह्माज्ञाननिवृत्तिः किं न स्यात्? न च तस्य ब्रह्माविषयत्वान्न ततो ब्रह्माज्ञाननिवृत्तिरिति वाच्यम्; "घटस्सन्" इत्यादिबुद्धिवृत्तेः सद्रूपब्रह्मविषयत्वोपगमात्। न च—तत्र घटाद्याकारवृत्त्या तदज्ञाननिवृत्तौ स्वतः स्फुरणादेव तदवच्छिन्नचैतन्यं सदिति प्रकाशते, न तस्य घटाद्याकारवृत्तिविषयत्वम्—इति वाच्यम्; तदभावे घटविषयं ज्ञानम्, तदवच्छिन्नचैतन्यविषयमज्ञानमिति भिन्नविषयेण ज्ञानेन तदज्ञाननिवृत्तेरयोगात्; जडे आवरणकृत्याभावेन घटस्याज्ञानाविषयत्वात्। न च घटादिवृत्तेस्तदवच्छिन्नचैतन्यविषयत्वेऽपि अखण्डानन्दाकारत्वाभावान्न ततो मूलाज्ञाननिवृत्तिरिति वाच्यम्; वेदान्तजन्यसाक्षात्कारेऽपि तदभावात्। न हि तत्राखण्डत्वमानन्दत्वं वा कश्चिदस्ति प्रकारः, वेदान्तानां संसर्गागोचरप्रमाजनकत्वलक्षणाखण्डार्थत्वहानापत्तेः। न च वेदान्तजन्यज्ञानादेव तन्निवृत्तिनियम इति वाच्यम्; क्लृप्ताज्ञाननिवर्तकत्वप्रयोजकरूपस्य ज्ञानान्तरेऽपि सद्भावे तथा नियन्तुमशक्यत्वात्। न च—घटाद्याकारवृत्तिविषयस्यावच्छिन्नचैतन्यस्यापि कल्पितत्वेन यन्मूलाज्ञानविषयभूतं सत्यमनवच्छिन्नं चैतन्यं तद्विषयत्वाभावाद् घटादिवृत्तीनां निवर्त्यत्वाभिमताज्ञानसमानविषयत्वलक्षणं क्लृप्तं प्रयोजकमेव[135] नास्ति—इति वाच्यम्; तत्रावच्छेदकांशस्य कल्पितत्वेऽप्यवच्छेद्यांशस्याकल्पितमूलाज्ञानविषयचैतन्यरूपत्वात्, तस्य कल्पितत्वे घटवज्जडतया अवस्थाज्ञानं प्रत्यपि विषयत्वायोगेनावस्थाज्ञानस्य मूलाज्ञानविषयाकल्पितचैतन्यविषयत्वस्य वक्तव्यतया तन्निवर्तकघटादिज्ञानस्यापि तद्विषयत्वावश्यम्भावेन तत्पक्षेऽपि ततो मूलाज्ञाननिवृत्तिप्रसङ्गस्यापरिहारात्[136]।

अत्राहुराचार्याः[137]—न चैतन्यं चक्षुरादिजन्यवृत्तिविषयः, 6·2

"न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।"[138]

"पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्॥"[139]

इत्यादिश्रुत्या तस्य परमाण्वादिवच्चक्षुराद्ययोग्यत्वोपदेशात्, औपनिषदमिति विशेषणाच्च। न च

"सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते।"[140]

इत्यादिवार्तिकविरोधः; तस्य घटाद्याकारवृत्त्युदये सति आवरणाभिभवात् स्वप्रभं सद्रूपं ब्रह्म "घटस्सन्" इति घटवद् व्यवहार्यं भवतीत्यौपचारिक-घटादिवृत्तिवेद्यत्वपरत्वात्। आवरणाभिभावकत्वं च घटादिज्ञानस्य घटादि-विषयत्वादेवोपपन्नम्, घटादेरप्यज्ञानविषयत्वात्, "घटं न जानामि घटज्ञानेन घटाज्ञानं नष्टम्" इत्यवस्थाज्ञानानां घटादिविषयत्वानुभवात्।

न च "तत्रावरणकृत्याभावादज्ञानाङ्गीकारो न युक्तः, तद्भासकस्य तदवच्छिन्नचैतन्यस्यावरणादेव तदप्रकाशोपपत्तेः" इति वाच्यम्, उक्तभङ्ग्या जडस्य साक्षादज्ञानविषयत्वप्रतिक्षेपेऽपि जडावच्छिन्नचैतन्यप्रकाशस्याज्ञानेनावरणम्, ततो नित्यचैतन्यप्रकाशसंसर्गेऽपि जडस्य "नास्ति, न प्रकाशते" इत्यादि-व्यवहारयोग्यत्वमिति[141] परम्परया अज्ञानविषयत्वाभ्युपगमात्; साक्षात्परम्परया वा यदज्ञानावरणीयम्, तद्विषयत्वस्यैव ज्ञानस्य तदज्ञाननिवर्तकत्वप्रयोजकशरीरे निवेशात्[142]। न चैवं घटादीनामुक्तरीत्या मूलाज्ञानविषयत्वमपि स्यादिति घटादिसाक्षात्कारादेव मूलाज्ञाननिवृत्त्यापातः;[143] फलबलात्तदज्ञानकार्या-तिरिक्ततद्विषयविषयकत्वस्यैव तन्निवर्तकत्वे तन्त्रत्वात्।

अथ वा मूलाज्ञानस्यैव जडं न विषयः; अवस्थाज्ञानानां त्ववच्छिन्न-चैतन्याश्रितानां तत्तज्जडमेव विषयः; अन्यथा चाक्षुषवृत्त्या चन्दनखण्डे चैतन्याभि-व्यक्तौ तत्संसर्गिणो गन्धस्याप्यापरोक्ष्यापत्तेः, तदनभिव्यक्तौ चन्दनतद्रूपयोरप्य-प्रकाशापत्तेः। न च "चाक्षुषवृत्त्या चन्दनतद्रूपावच्छिन्नचैतन्ययोरभिव्यक्त्या तयोः प्रकाशः, गन्धाकारवृत्त्यभावेन गन्धावच्छिन्नचैतन्यस्यानभिव्यक्त्या तस्या-

प्रकाशश्च" इति वाच्यम्; चैतन्यस्य द्विगुणीकृत्य वृत्त्यभावेन[144] एकद्रव्यगुणानां स्वाश्रये सर्वत्र व्याप्य वर्तमानानां पृथक् पृथग् गगनावच्छेदकत्वस्येव चैतन्यावच्छेदकत्वस्याप्यसम्भवात्, तेषां[145] स्वाश्रयद्रव्यावच्छिन्नचैतन्येनैव शुक्तीदमंशावच्छिन्नचैतन्येन शुक्तिरजतवत् प्रकाश्यतया तस्याभिव्यक्तौ गन्धस्यापि प्रकाशस्य, अनभिव्यक्तौ[146] रूपादेरप्यप्रकाशस्य चापत्तेः। न च गन्धाकारवृत्त्युपरक्ते एव चैतन्ये गन्धः प्रकाशते इति नियमः, प्रकाशसंसर्गस्यैव प्रकाशमानशब्दार्थत्वेनासत्यामपि तदाकारवृत्तावनावृतप्रकाशसंसर्गे अप्रकाशमानत्वकल्पनस्य विरुद्धत्वात्, अभिव्यक्तस्य गन्धोपादानचैतन्यस्य गन्धासंसर्गोक्त्यसम्भवात्। तस्माद्यथा चैत्रस्य घटवृत्तौ तं प्रत्यावरकस्यैवाज्ञानस्य निवृत्तिरिति तस्यैव विषयप्रकाशो नान्यस्य, तथा तत्तद्विषयाकारवृत्त्या तत्तदावराकाज्ञानस्यैव निवृत्तेर्न विषयान्तरस्यापरोक्ष्यम्, अनावृतार्थस्यैव संविदभेदादापरोक्ष्यमित्यभ्युपगमात्; इति प्रमातृभेदेनेव विषयभेदेनाप्येकत्र चैतन्ये अवस्थाज्ञानभेदस्य वक्तव्यतया अवस्थाज्ञानानां तत्तज्जडविषयकत्वमिति घटादिवृत्तीनां नावस्थाज्ञाननिवर्तकत्वे काचिदनुपपत्तिः; न वा मूलाज्ञाननिवर्तकत्वापत्तिः। न चैवमपि जीवविषयाया अहमाकारवृत्तेः[147] मूलाज्ञाननिवर्तकत्वापत्तिः; तस्याः स्वयंप्रकाशमानचित्संवलिताचिदंशमात्रविषयत्वात्; "सोऽहम्" इति प्रत्यभिज्ञाया अपि स्वयम्प्रकाशचैतन्ये अन्तःकरणवैशिष्ट्येन सह पूर्वापरकालवैशिष्ट्यमात्रविषयत्वेन चैतन्यविषयत्वाभावात्—इति।

6·3 केचित्तु—घटादिवृत्तीनां तत्तदवच्छिन्नचैतन्यविषयत्वमभ्युपगम्य,

"सर्वमानप्रसक्तौ च सर्वमानफलाश्रयात्।
श्रोतव्येतिवचः प्राह वेदान्तावरुरुत्सया॥"[148]

इति वार्तिकोक्तश्रोतव्यवाक्यार्थवेदान्तनियमविध्यनुसारेण वेदान्तजन्यमेव नियमादृष्टसहितं ब्रह्मज्ञानमप्रतिबद्धं ब्रह्माज्ञाननिवर्तकमिति न घटादिज्ञानात्तन्निवृत्तिप्रसङ्गः—इत्याहुः।

6·4 अन्ये तु—तत्त्वमस्यादिवाक्यजन्यं जीवब्रह्माभेदगोचरमेव ज्ञानं मूलाज्ञाननिवर्तकम्, मूलाज्ञानस्य तदभेदगोचरत्वात्, इति न चैतन्यस्वरूपमात्र-

गोचराद् घटादिज्ञानात्तन्निवृत्तिप्रसङ्गः । न च "अभेदस्य तत्त्वावेदकप्रमाणबोध्यस्य चैतन्यातिरेके द्वैतापत्तेश्चैतन्यमात्रमभेद इति तद्गोचरं घटादिज्ञानमप्यभेदगोचरम्" इति वाच्यम् । न ह्यभेदज्ञानमिति विषयतो विशेषं ब्रूमः, किं तु तत्त्वंपदवाच्यार्थधर्मिद्वयपरामर्शादिरूपकारणविशेषाधीनेन स्वरूपसंबन्धविशेषेण चैतन्यविषयत्वमेव तदभेदज्ञानत्वम् । यथा हि विशेषणविशेष्यतत्सम्बन्धगोचरत्वाविशेषेऽपि विशिष्टज्ञानस्य विशेषणज्ञानादिकारणविशेषाधीनस्वरूपसम्बन्धविशेषेण तत्त्रितयगोचरत्वमेव समूहालम्बनव्यावृत्तं विशिष्टज्ञानत्वम्, यथा वा "स्थाणुत्वपुरुषत्ववान्" इत्याहार्यवृत्तिव्यावृत्तं संशयत्वं विषयतो विशेषानिरूपणात्, तथा घटादावपि "सोऽयं घटः" इत्यादिज्ञानस्य स्वरूपसम्बन्धविशेषेण घटादिविषयत्वमेव केवलघटशब्दादिजन्यज्ञानव्यावृत्तं तदभेदज्ञानत्वम्, अतिरिक्ताभेदानिरूपणात् । अभावसादृश्यादीनामधिकरणप्रतियोग्यादिभिः स्वरूपसम्बन्धयुक्तानामधिकरणेनाधाराधेयभावरूपः स्वरूपसम्बन्धविशेषः प्रतियोगिना प्रतियोग्यनुयोगिभावरूप इत्यादिप्रकारेण स्वरूपसम्बन्धे अवान्तरविशेषकल्पनावद् वृत्तीनां विषयेऽपि संयोगतादात्म्ययोरतिप्रसक्त्या विषयैर्विषयविषयिभावरूपस्वरूपसम्बन्धवतीनां विषयविशेषनिरूपणासम्भवे क्लृप्ते एव स्वरूपसम्बन्धे अवान्तरविशेषकल्पनेनाभेदज्ञानत्वादिपरस्परवैलक्षण्यनिर्वाहाच्च । एवं च ब्रह्मज्ञानस्याभेदाख्यकिञ्चित्संसर्गगोचरत्वानभ्युपगमान्न वेदान्तानामखण्डार्थत्वहानिः—इत्याहुः ।

"ननु घटादिज्ञानवद् ब्रह्मज्ञानस्यापि न मूलाज्ञाननिवर्तकत्वं युक्तम्; 6·5
निवर्तकत्वे तदवस्थानासहिष्णुत्वरूपस्य विरोधस्य तन्त्रत्वात्, कार्यस्य चोपादानेन सह तादृशविरोधाभावात्"; इति चेन्न; कार्यकारणयोरन्यत्र तादृशविरोधादर्शनेऽपि एकविषयज्ञानाज्ञानप्रयुक्तस्य तादृशविरोधस्यात्र सत्त्वात्, कार्यकारणयोरप्यग्निसंयोगपटयोस्तादृशविरोधस्य दृष्टेश्च । न चाग्निसंयोगाद्[149] अवयवविभागप्रक्रियया असमवायिकारणसंयोगनाशादेव पटनाशो नाग्निसंयोगादिति वाच्यम्; दग्धपटेऽपि पूर्वसंस्थानानुवृत्तिदर्शनेन मुद्गरचूर्णीकृतघटवदवयव-

विभागादर्शनात्, तत्रावयवविभागादिकल्पनाया अप्रामाणिकत्वात्। नापि तत्र तन्तूनामपि दाहेन समवायिकारणनाशात् पटनाश इति युक्तम्; अंशुतन्त्वादिभिस्सह युगपदेव पटस्य दाहदर्शनेन क्रमकल्पनायोगात्; यतोऽधस्तान्नावयवनाशः, तत्रावयवे अग्निसंयोगादेव नाशस्य वाच्यत्वात्।

7·0 "नन्वस्त्वेतदेवम्, तथापि सविलासाज्ञाननाशकमिदं ब्रह्मज्ञानं कथं नश्येत्, नाशकान्तरस्याभावात्?" इति चेत्—[150]

7·1 यथा कतकरजः सलिलेन संयुज्य पूर्वसंयुक्तरजोऽन्तरविश्लेषं जनयत् स्वविश्लेषमपि जनयति, तथात्मन्यध्यस्यमानं ब्रह्मज्ञानं पूर्वाध्यस्तसर्वप्रपञ्चं निवर्तयत् स्वात्मानमपि निवर्तयति—इति केचित्[151]।

7·2 अन्ये तु अन्यन्निवर्त्य स्वयमपि निवृत्तौ दग्धलोहपीताम्बुन्यायमुदाहरन्ति; अपरे त्वत्र दग्धतृणकूटदहनोदाहरणमाहुः।

7·3 न च ध्वंसस्य प्रतियोग्यतिरिक्तजन्यत्वनियमः, अप्रयोजकत्वात्, निरिन्धनदहनादिध्वंसे व्यभिचाराच्च। न च "ध्वंसस्य प्रतियोगिमात्रजन्यत्वेऽतिप्रसङ्गात् कारणान्तरमवश्यं वाच्यम्; निरिन्धनदहनादिध्वंसेऽपि कालादृष्टेश्वरेच्छादिकारणान्तरमस्ति" इति वाच्यम्; अतिप्रसङ्गापरिज्ञानात्। न च घटादिध्वंसस्यापि कारणान्तरनिरपेक्षत्वं स्यादित्यतिप्रसङ्गः, ध्वंसमात्रे कारणान्तरनैरपेक्ष्यानभिधानात्। न च[152] घटध्वंसदृष्टान्तेन ब्रह्मज्ञानध्वंसस्य कारणान्तरापेक्षासाधनम्, तद्दृष्टान्तेन मुद्गरपतनापेक्षाया अपि साधनापत्तेः। नापि ज्ञानध्वंसत्वसाम्याद् घटज्ञानादिध्वंसस्यापि कारणान्तरनैरपेक्ष्यं स्यादित्यतिप्रसङ्गः, सेन्धनानलध्वंसस्य जलसेकादिदृष्टकारणापेक्षत्वेऽपि निरिन्धनानलध्वंसस्य तदनपेक्षत्ववज्जाग्रज्ज्ञानध्वंसस्य विरोधिविशेषगुणान्तरापेक्षत्वेऽपि सुषुप्तिपूर्वज्ञानध्वंसस्य तदनपेक्षत्ववच्च मूलाज्ञानानिवर्तकज्ञानध्वंसस्य कारणान्तरसापेक्षत्वेऽपि तन्निवर्तकज्ञानध्वंसस्य तदनपेक्षत्वोपपत्तेः। नापि कारणान्तरनैरपेक्ष्ये स्वोत्पत्त्युत्तरक्षणे एव नाशः स्यादित्यतिप्रसङ्गः, इष्टापत्तेः; तदुत्पत्त्युत्तरक्षणे एव ब्रह्माध्यस्तनिखिलप्रपञ्चदाहेन तदन्तर्गतस्य तस्यापि तदैव दाहा-

भ्युपगमात्; निरिन्धनदहनध्वंसन्यायेन ब्रह्मज्ञानध्वंसस्यापि कालादृष्टेश्वरेच्छादिकारणान्तरजन्यत्वेऽप्यविरोधाच्च; सर्वप्रपञ्चनिवृत्त्यनन्तरमेकशेषस्य ब्रह्मज्ञानस्य निवृत्तिरित्यनभ्युपगमेन युगपत् सर्वदाहे पूर्वक्षणे[153] चिदविद्यासम्बन्धरूपस्य द्रव्यान्तररूपस्य वा कालस्य ईश्वरप्रसादरूपस्यान्तःकरणगुणविशेषरूपस्य वादृष्टस्य अन्येषां च सत्त्वात्। न च "तत्रज्ञानातिरिक्तकारणापेक्षणे ब्रह्मज्ञानस्यामिथ्यात्वप्रसङ्गः, ज्ञानैकनिवर्त्यत्वं मिथ्यात्वमित्यभ्युपगमात्" इति वाच्यम्; ज्ञानाघटितसामग्र्यनिवर्त्यत्वे सति ज्ञाननिवर्त्यत्वस्य तदर्थत्वात्; "नान्यः पन्थाः"[154] इतिश्रुतेरपि तत्रैव तात्पर्यात्। अतो युक्त एव दग्धदाह्यदहनादिन्यायः।

केचित्तु—वृत्तिरूपं ब्रह्मज्ञानं नाज्ञानतन्मूलप्रपञ्चनिवर्तकम्, अज्ञानस्य प्रकाशनिवर्त्यत्वनियमेन जडरूपवृत्तिनिवर्त्यत्वायोगात्; किं तु तदारूढचैतन्यप्रकाशस्तन्निवर्तकः, स्वरूपेण तस्याज्ञानादिसाक्षितया तदनिवर्तकत्वेऽप्यखण्डाकारवृत्त्युपारूढस्य तन्निवर्तकत्वोपपत्तेः; 7·4

"तृणादेर्भासिकाप्येषा सूर्यदीप्तिस्तृणं दहेत्।
सूर्यकान्तमुपारुह्य तन्न्यायं तत्र योजयेत्॥"[155]

इत्यभियुक्तोक्तेः। एवं च यथा किञ्चित् काष्ठमुपारुह्य ग्रामनगरादिकं दहन् वह्निर्दहत्येव तदपि काष्ठम्, तथा चरमवृत्तिमुपारुह्य निखिलप्रपञ्चमुन्मूलयन्नखण्डचैतन्यप्रकाशस्तन्निवर्तनेऽपि प्रगल्भते[156] इति न तन्नाशे काचिदनुपपत्तिः—इत्याहुः।

अन्ये तु—ब्रह्मज्ञानमज्ञानस्यैव निवर्तकम्, ज्ञानाज्ञानयोरेव साक्षाद्विरोधात्; प्रपञ्चस्य तूपादाननाशान्नाश इति प्रपञ्चान्तर्गतस्य ब्रह्मज्ञानस्यापि तत एव नाशः। न च प्रपञ्चस्य ज्ञानानिवर्त्यत्वे मिथ्यात्वानुपपत्तिः; प्रपञ्चनिवृत्तेस्साक्षाद् ज्ञानजन्यत्वाभावेऽपि ज्ञानजन्याज्ञाननाशजन्यत्वात्, "साक्षात् परम्परया वा ज्ञानैकनिवर्त्यत्वं मिथ्यात्वम्" इत्यङ्गीकारात्। 7·5

एवं च तत्त्वसाक्षात्कारोदयेऽपि जीवन्मुक्तस्य देहादिप्रतिभास उपपद्यते; प्रारब्धकर्मणा प्रतिबन्धेन तत्त्वसाक्षात्कारोदयेऽपि प्रारब्धकर्मतत्कार्यदेहादिप्रतिभासानुवृत्त्यु[157]-पादानाविद्यालेशानुवृत्त्युपपत्तेः[158] । अज्ञानवत् प्रपञ्चस्यापि साक्षाद् ब्रह्मसाक्षात्कारनिवर्त्यत्वे नायमुपपद्यते; विरोधिनि ब्रह्मसाक्षात्कारे सति प्रारब्धकर्मणः स्वयमवस्थानासम्भवेन[159] अविद्यालेशनिवृत्तिप्रतिबन्धकत्वायोगात् —इत्याहुः ।

इति तृतीयः परिच्छेदः

———

अथ कोऽयमविद्यालेशः, यदनुवृत्त्या जीवन्मुक्तिः[1] ? 1·1

आवरणविक्षेपशक्तिमत्या मूलाविद्यायाः प्रारब्धकर्मवर्तमानदेहाद्यनुवृत्ति-
प्रयोजको विक्षेपशक्त्यंश इति केचित् ।

क्षालितलशुनभाण्डानुवृत्तलशुनवासनाकल्पोऽविद्यासंस्कार इत्यन्ये । 1·2

दग्धपटन्यायेनानुवृत्ता मूलाविद्यैवेत्यपरे । 1·3

सर्वज्ञात्मगुरवस्तु[2]—विरोधिसाक्षात्कारोदये लेशतोऽप्यविद्यानुवृत्त्यसम्भ- 1·4
वाज्जीवन्मुक्तिशास्त्रं श्रवणादिविध्यर्थवादमात्रम्, शास्त्रस्य जीवन्मुक्तिप्रतिपादने
प्रयोजनाभावात्; अतः कृतनिदिध्यासनस्य ब्रह्मसाक्षात्कारोदयमात्रेण सविलास-
वासनाविद्यानिवृत्तिः—इत्यपि कञ्चित् पक्षमाहुः ।

अथ केयमविद्यानिवृत्तिः ? 2·0

आत्मैवेति ब्रह्मसिद्धिकाराः । न च तस्य नित्यसिद्धत्वाज् ज्ञानवैयर्थ्यम्; 2·1
असति ज्ञानेऽनर्थहेत्वविद्याया विद्यमानतया अनर्थमपि तिष्ठेदिति[3] तदन्वेषणात्;
यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चाभावस्तत् तत्साध्यम्
इति लक्षणानुरोधेनात्मरूपाया[4] अप्यविद्यानिवृत्तेः ज्ञानसाध्यत्वाच्च; ज्ञाने सत्यग्रि-
मक्षणे आत्मरूपाविद्यानिवृत्तिसत्त्वम्, तद्व्यतिरेके तत्प्रतियोग्यविद्यारूपस्तदभाव
इत्युक्तलक्षणसत्त्वात्[5] ।

आत्मान्यैवाविद्यानिवृत्तिः; सा च न सती, अद्वैतहानेः; नाप्यसती, 2·2
ज्ञानसाध्यत्वायोगात्; नापि सदसद्रूपा, विरोधात्; नाप्यनिर्वाच्या, अनिर्वा-
च्यस्य सादेरज्ञानोपादानकत्वनियमेन मुक्तावपि तदुपादानाज्ञानानुवृत्त्यापत्तेः,
ज्ञाननिवर्त्यत्वापत्तेश्च; किं तु उक्तप्रकारचतुष्टयोत्तीर्णा पञ्चमप्रकारा—इत्यानन्द-
बोधाचार्याः[6] ।

अविद्यावत्तन्निवृत्तिरप्यनिर्वाच्यैव । न च तदनुवृत्तौ तदुपादानाज्ञानस्या- 2·3
प्यनुवृत्तिनियमादनिर्मोक्षप्रसङ्गः, तदनुवृत्तौ प्रमाणाभावात्; उत्पत्तेः प्रथम-

समयमात्रसंसर्गिभावविकारत्ववन्निवृत्तेरपि चरमसमयमात्रसंसर्गिभावविकारत्वोपपत्तेः । अत एव यथा पूर्वं पश्चाच्च "उत्पत्स्यते, उत्पन्नः" इति भाविभूतभावेन व्यवह्रियमाणाया उत्पत्तेः प्रथमसमयमात्रे "उत्पद्यते" इति वर्तमानव्यवहारः, तथा पूर्वं पश्चाच्च "निवर्तिष्यते, निवृत्तः" इति भाविभूतभावेन व्यवह्रियमाणाया निवृत्तेश्चरमसमयमात्रे "निवर्तते, नश्यति, ध्वंसते" इति वर्तमानव्यपदेशः[7] । निवृत्तेरनुवृत्तौ तु चिरशकलितेऽपि घटे "इदानीं निवर्तते" इत्यादिव्यवहारः स्यात्; आख्यातानां प्रकृत्यर्थगतवर्तमानत्वाद्यर्थाभिधायित्वात् ।

"ननु च तेषां स्वाभिहितसङ्ख्याश्रयप्रकृत्यर्थकर्तृकर्मगतवर्तमानत्वाद्यर्थाभिधायकत्वम्, स्वाभिहितप्रकृत्यर्थानुकूलव्यापारगतवर्तमानत्वाद्यर्थाभिधायकत्वं वास्तु, तथा च निवृत्तिक्रियाकर्तुश्चिरचूर्णितस्य घटस्य तद्गतनिवृत्त्यनुकूलव्यापारस्य चावर्तमानत्वान्नोक्तातिप्रसङ्गः" इति चेत्, न; आद्ये उत्पन्नेऽपि घटे "उत्पद्यते" इति व्यवहारापत्तेः, उत्पत्तिक्रियाकर्तुर्घटस्य वर्तमानत्वात्[8]; द्वितीये आमवातजडीकृतकलेबरे उत्थानानुकूलयत्नवत्युत्थानानुदयेऽपि "उत्तिष्ठति" इतिव्यवहारापत्तेः, आख्यातार्थस्य प्रकृत्यर्थभूतोत्थानानुकूलस्य यत्नरूपव्यापारस्य वर्तमानत्वात् । तस्मात् प्रकृत्यर्थगतमेव वर्तमानत्वाद्याख्यातार्थं इति ध्वंसस्य स्थायित्वे चिरनिवृत्तेऽपि घटे "निवर्तते" इति व्यवहारो दुर्वारः ।

यदि च मुद्गरादिशकलिते घटे ध्वंसो नाम कश्चिदभावस्तत्प्रतियोगिकः स्थायी भूतलाद्याश्रित उपेयते, तदा कपालमालापसरणे तदनपसरणेऽपि मणिकशरावादिकपालव्यावृत्तकपालसंस्थानविशेषादर्शने च किमिति स प्रत्यक्षो न स्यात्? कपालसंस्थानविशेषादिनानुमेयो घटादिध्वंसो न प्रत्यक्ष इति चेत्, तर्हि तेन[9] मुद्गरपातकालीनस्योत्पत्तिवद् भावविकाररूपतया प्रतियोग्याश्रितस्य ध्वंसस्यानुमानं सम्भवतीति न ततः पश्चादनुवर्तमानप्रतियोग्यधिकरणाश्रिताभावरूपध्वंससिद्धिः; "इह भूतले घटो ध्वस्तः" इति भूतले ध्वंसाधिकरणत्वव्यवहारस्य "इह भूतले घट उत्पन्नः" इतिवद् भावविकारयुक्तप्रतियोग्यधिकरणत्वविषयत्वोपपत्तेः; घटध्वंसानन्तरं भूतले घटाभावव्यवहारस्य घटापसरणानन्तरं

तदभावव्यवहारवत् समयविशेषसंसर्ग्यत्यन्ताभावालम्बनतोपपत्त्या ध्वंसविषयत्वस्याकल्पनीयत्वाच्च । एवं सति घटोत्पत्तेः पूर्वं तदभावव्यवहारोऽप्यत्यन्ताभावेन चरितार्थ इति प्रागभावोऽपि न स्यादिति चेत्, सोऽपि[10] मा भूत् ।

"नन्वेवं प्रागभावाधारकालः पूर्वकालः, ध्वंसाधार उत्तरकालः इति 2·31
निर्वचनासम्भवात् काले पूर्वोत्तरादिव्यवहारः किमालम्बनस्स्यात्"? घटादिषु प्रतियोगित्वादिव्यवहारवदखण्डकिञ्चिद्धर्मगोचरोऽस्तु ; अभावरूपस्थायिध्वंसाभ्युपगमेऽपि तेषु ध्वंसत्वादेरखण्डस्य वक्तव्यत्वात् । न च जन्याभावत्वरूपं सखण्डमेव ध्वंसत्वम् ; ध्वंसप्रागभावरूपस्य घटस्य तद्ध्वंसत्वापत्तेः । न च सप्तमपदार्थरूपाभावत्वं विवक्षितम्, घटस्य प्रागभावं प्रत्यपि ध्वंसत्वाभावप्रसङ्गेन घटकाले प्रागभावोत्तरकालत्वव्यवहारस्य निरालम्बनत्वापत्तेः । न च प्रतियोग्यतिरिक्तः प्रागभावध्वंसः, तथा सति तुल्यन्यायतया ध्वंसप्रागभावोऽपि प्रतियोग्यतिरिक्तः स्यादिति प्रागभावध्वंसस्यापि प्रागभावोऽन्यः, तस्यापि कश्चिद्ध्वंसः, तस्यापि प्रागभावोऽन्य इत्यप्रामाणिकानवधिकध्वंसप्रागभावकल्पनापत्तेः । न चान्यद्ध्वंसत्वमात्माश्रयादिशून्यं निर्वक्तुं शक्यम् । एवं प्रागभावत्वमपीत्यन्यत्र विस्तरः । तस्मान्न पूर्वं प्रागभावः, न च पश्चात् ध्वंसाभावः ; मध्ये परं कियत्कालमनिर्वचनीयोत्पत्तिस्थितिध्वंसरूपभावविकारवान् घटाद्यध्यासः । एवं चाविद्यानिवृत्तिरपि ब्रह्मसाक्षात्कारोदयानन्तरक्षणवर्ती कश्चिद्भावविकार इति तस्या मुक्तावनुवृत्त्यभावान्न तदनिर्वाच्यत्वे कश्चिद्दोषः—इत्यद्वैतविद्याचार्याः ।

"नन्वेवमविद्यानिवृत्तेः क्षणिकत्वे मोक्षः स्थिरपुरुषार्थो न स्यात्" इति चेत्, 2·41
भ्रान्तोऽसि । न ह्यविद्यानिवृत्तिः स्वयमेव पुरुषार्थ इति तस्या ज्ञानसाध्यत्वमुपेयते, तस्याः सुखदुःखाभावेतरत्वात् ; किं त्वखण्डानन्दावरकसंसारदुःखहेत्वविद्योच्छेदे अखण्डानन्दस्फुरणं संसारदुःखोच्छेदश्च भवतीति तदुपयोगितया तस्यास्तत्त्वज्ञानसाध्यत्वमुपेयते ।

चित्सुखाचार्यास्तु—[11] दुःखाभावोऽपि मुक्तौ न स्वतःपुरुषार्थः ; सर्वत्र 2·42
दुःखाभावस्य स्वरूपसुखाभिव्यक्तिप्रतिबन्धकाभावतया सुखशेषत्वात् सुखस्यैव

स्वतःपुरुषार्थत्वम्, अन्येषां सर्वेषामपि तच्छेषत्वमिति सुखसाधनताज्ञानस्यैव प्रवर्तकत्वे सम्भवति, दुःखाभावस्यापि स्वतः पुरुषार्थत्वं परिकल्प्य तत्साधनप्रवर्तकसङ्ग्रहायेष्टसाधनताज्ञानस्य इच्छाविषयत्वप्रवेशेन गुरुघटितस्य प्रवर्तकत्वकल्पनायोगात्। न च दुःखाभाव एव स्वतःपुरुषार्थस्तच्छेषतया सुखं काम्यमिति वैपरीत्यापत्तिः; बहुकालदुःखसाध्येऽपि क्षणिकसुखजनके निन्दितग्राम्यधर्मादौ प्रवृत्तिदर्शनात्; तत्र क्षणिकसुखकालीनदुःखाभावस्य पुरुषार्थत्वे तदर्थं बहुकालदुःखानुभवायोगात्। न च तत्र क्षणिकसुखस्य पुरुषार्थत्वेऽपि दोषतौल्यम्, भावरूपे सुखे उत्कर्षापकर्षयोरनुभवसिद्धत्वेन क्षणमपि[12] अत्युत्कृष्टसुखार्थं बहुकालदुःखानुभवोपपत्तेः, दुःखाभावे चोत्कर्षापकर्षासम्भवात्[13]। तस्मान्मुक्तौ संसारदुःखनिवृत्तिरप्यविद्यानिवृत्तिवत् सुखशेष इत्यनवच्छिन्नानन्दप्राप्तिरेव स्वतः पुरुषार्थः—इत्याहुः।

3·1 नन्वनवच्छिन्नानन्दः प्रत्यग्रूपतया नित्यमेव प्राप्तः। सत्यम्; नित्यप्राप्तोऽप्यनवच्छिन्नानन्दस्तमावृत्य तद्विपरीतमर्थं प्रदर्शयन्त्या अविद्यया संसारदशायामसत्कल्पत्वं नीत इत्यकृतार्थताभून्निवर्तितायां च तस्यां निरस्तनिखिलानर्थविक्षेपे स्वकण्ठगतविस्मृतकनकाभरणवत् प्राप्यत इवेत्यौपचारिकी तस्य प्राप्तव्यता—इति केचित्[14]।

3·2 अन्ये तु—संसारदशायाम् "नास्ति, न प्रकाशते" इतिव्यवहारयोग्यत्वरूपाज्ञानावरणप्रयुक्तस्य "मम निरतिशयानन्दो नास्ति" इतिप्रत्ययस्य सर्वसिद्धत्वात् तदालम्बनभूतः कश्चिद् ब्रह्मानन्दस्याभावः काल्पनिको यावदविद्यमनुवर्तते, अविद्यानिवृत्तौ च तन्मूलत्वान्निवर्तते इति "यस्मिन् सत्यग्रिमक्षणे" इत्यादिलक्षणानुरोधेन मुख्यमेव तस्य प्राप्यत्वम्[15]—इत्याहुः।

3·31 अपरे तु—अवेद्यस्यापुरुषार्थत्वात्संसारदशायां सदप्यनवच्छिन्नसुखमापरोक्ष्याभावान्न पुरुषार्थः। न च "स्वरूपज्ञानेनापरोक्ष्यं तदाप्यस्ति तस्य सर्वदा स्वरूपसुखाभिन्नत्वात्, वृत्तिज्ञानेनापरोक्ष्यं तु न मुक्तावपि" इति वाच्यम्। न हि स्वव्यवहारानुकूलचैतन्याभेदमात्रमापरोक्ष्यम्, घटावच्छिन्नचैतन्याभिव्यक्तौ

तदभिन्नस्य घटगन्धस्याप्यापरोक्ष्यापत्तेः; किं त्वनावृतार्थस्य तदभेदः। तथा चानावृतत्वांशस्तत्त्वसाक्षात्कारे सत्येवेति निरतिशयसुखापरोक्ष्यस्य पुरुषार्थस्य विद्याप्राप्यत्वं युक्तम्—इत्याहुः।

इतरे तु—अस्तु व्यवहारानुकूलचैतन्याभेदमात्रमापरोक्ष्यम्; तथाप्यज्ञानमहिम्ना जीवभेदवच्चिदानन्दभेदोऽप्यध्यस्त[16] इति संसारदशायां पुरुषान्तरस्य पुरुषान्तरचैतन्यापरोक्ष्यवद् अनवच्छिन्नसुखापरोक्ष्यमपि नास्ति; अज्ञाननिवृत्तौ तु चिदानन्दभेदप्रविलयात्तदापरोक्ष्यमिति तस्य विद्यासाध्यत्वम्—इत्याहुः। 3·32

अथ विद्योदये सत्युपाधिविलयादपेतजीवभावस्य किमीश्वरभावापत्तिर्भवत्युत शुद्धचैतन्यमात्ररूपेणावस्थानमिति विवेचनीयम्। 4·0

उच्यते। एकजीववादे तदेकाज्ञानकल्पितस्य जीवेश्वरविभागादिकृत्स्नभेदप्रपञ्चस्य तद्विद्योदये विलयान्निर्विशेषचैतन्यरूपेणैवावस्थानम्। 4·1

अनेकजीववादमभ्युपगम्य बद्धमुक्तव्यवस्थाङ्गीकारेऽपि यद्यपि कस्यचिद्विद्योदये तदविद्याकृतप्रपञ्चविलयेऽपि बद्धपुरुषान्तराविद्याकृतो जीवेश्वरविभागादिप्रपञ्चोऽनुवर्तते, तथापि जीव इव ईश्वरोऽपि प्रतिबिम्बविशेष इति पक्षे मुक्तस्य बिम्बभूतशुद्धचैतन्यरूपेणैवावस्थानम्; अनेकोपाधिष्वेकस्य प्रतिबिम्बे सति एकोपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनैवावस्थानौचित्येन प्रतिबिम्बान्तरत्वापत्त्यसम्भवात्। तत्सम्भवे कदाचिज्जीवरूपप्रतिबिम्बान्तरत्वापत्तेरपि दुर्वारत्वेनावच्छेदपक्षे इव मुक्तस्य पुनर्बन्धापत्तेः। अत एवानेकजीववादे अवच्छेदपक्षो नाद्रियते, यदवच्छेदेन मुक्तिस्तदवच्छेदेनान्तःकरणान्तरसंसर्गे पुनरपि बन्धापत्तेः। 4·21

प्रतिबिम्बो जीवः, बिम्बस्थानीय ईश्वरः, उभयानुस्यूतं शुद्धचैतन्यम् इति पक्षे तु मुक्तस्य यावत्सर्वमुक्ति सर्वज्ञत्वसर्वकर्तृत्वसर्वेश्वरत्वसत्यकामत्वादिगुणपरमेश्वरभावापत्तिरिष्यते। यथा अनेकेषु दर्पणेष्वेकस्य मुखस्य प्रतिबिम्बे सत्येकदर्पणापनये तत्प्रतिबिम्बो बिम्बभावेनावतिष्ठते, न तु मुखमात्ररूपेण, 4·22

तदानीमपि दर्पणान्तरसन्निधानप्रयुक्तस्य मुखे बिम्बत्वस्यानपायात्, तथैकस्य ब्रह्मचैतन्यस्यानेकेषूपाधिषु प्रतिबिम्बे सत्येकस्मिन् प्रतिबिम्बे विद्योदये तेन तदुपाधिविलये तत्प्रतिबिम्बस्य बिम्बभावेनावस्थानावश्यम्भावात् ।

4·221 न च मुक्तस्याविद्याभावात् सत्यकामत्वादिगुणविशिष्टसर्वेश्वरत्वानुपपत्तिः, तदविद्याभावेऽपि तदानीं बद्धपुरुषान्तराविद्यासत्त्वात् । न हीश्वरस्यैश्वरत्वं सत्यकामत्वादिगुणविशिष्टत्वं च स्वाविद्याकृतम्, तस्य निरञ्जनत्वात्, किं तु बद्धपुरुषाविद्याकृतमेव तत्सर्वमेष्टव्यम् ।

4·222 न च "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति"[17], "तं यथायथोपासते", इत्यादिश्रुतिषु सगुणोपासकानामपीश्वरसायुज्यश्रवणान्मुक्तेः सगुणविद्याफलाविशेषापत्तिः । सगुणोपासकानामखण्डसाक्षात्काराभावान्नाविद्यानिवृत्तिः, न वा तन्मूलाहङ्कारादेर्विलयः, आवरणानिवृत्तेर्नाखण्डानन्दस्फुरणम्; "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च"[18], "भोगमात्रसाम्यलिङ्गाच्च"[19] इत्यादिसूत्रोक्तन्यायेन तेषां परमेश्वरेण भोगसाम्येऽपि सङ्कल्पमात्रात् स्वभोगोपयुक्तदिव्यदेहेन्द्रियवनितादिसृष्टिसामर्थ्येऽपि सकलजगत्सृष्टिसंहारादिस्वातन्त्र्यलक्षणं न निरवग्रहमैश्वर्यम्; मुक्तानां तु निस्सन्धिबन्धमीश्वरभावं प्राप्तानां तत्सर्वमिति महतो विशेषस्य सद्भावात् ।

4·223 न च परमेश्वरस्य रघुनाथाद्यवतारे तमस्वित्वदुःखसंसर्गादिश्रवणान्मुक्तानामीश्वरभावे पुनर्बन्धापत्तिः; तस्य विप्रशापामोघत्वादिस्वकृतमर्यादापरिपालनाय कथंचिद् भृगुशापादिसत्यत्वं प्रत्याययितुं नटवदीश्वरस्य तदभिनयमात्रपरत्वात्; अन्यथा तस्य नित्यमुक्तत्वनिरवग्रहस्वातन्त्र्यसमाभ्यधिकराहित्यादिश्रुतिविरोधात् । तस्माद्यावत्सर्वमुक्ति परमेश्वरभावो मुक्तस्येति बिम्बेश्वरभावे न कश्चिद्दोषः ।

4·224 अयमेव पक्षः श्रुतिसूत्रभाष्याद्यनुगुणः । तथा हि । समन्वयाध्याये तावत् "दहर उत्तरेभ्यः" इत्यधिकरणे[20]—"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन् अन्तराकाशः"[21] इत्यादिश्रुतिनिर्दिष्टो दहराकाशो न भूताकाशो नापि जीवः, किं तु परमेश्वरः, उत्तरेभ्यो 'वाक्य-

शेषेभ्यः, "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते," [22] "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः", [23] "एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो ऽपिपासः सत्यकामः सत्यसङ्कल्पः" [24] इत्यादिना प्रतिपाद्यमानेभ्यो द्यावापृथिव्याद्याधारत्वलक्षणगुणेभ्यो हेतुभ्यः—इति निर्णीय "उत्तराच्चेदाविर्भूतस्वरूपस्तु" [25] इतिसूत्रान्तरेण दहरविद्यानन्तरमिन्द्रप्रजापतिसंवादे [26] "य आत्मापहतपाप्मा" इत्यादिना अपहतपाप्मत्वादिगुणाष्टकयुक्तमात्मानमुपदेश्यमुपक्षिप्य, "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मा" [27] इति जाग्रदवस्थायां द्रष्टृत्वेनाक्षिसन्निहितस्य, "य एष स्वप्ने महीयमानश्चरति एष आत्मा" [28] इति स्वप्नावस्थापन्नस्य, "तद्यत्रैतत्सुप्तस्समस्तस्सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मा" [29] इति सुषुप्त्यवस्थापन्नस्य, "एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" [30] इत्यवस्थात्रयोत्तीर्णस्य च जीवस्योपदेशाज्जीवेऽप्यस्ति अपहतपाप्मत्वादिगुणाष्टकमिति न तद् दहराकाशस्य परमेश्वरत्वनिर्णायकम्, "य एष स्वप्ने" इत्यादिपर्यायेषु प्रतिपर्यायम् "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इतिश्रवणेन स्फुटस्वप्नादिजीवलिङ्गानां द्वितीयादिपर्यायाणामेव जीवविषयत्वम्, प्रथमपर्यायस्य च ब्रह्मविषयत्वमिति चोद्यानवकाशादित्याशङ्क्य, तत्र चतुर्थपर्याये निरूप्यमाणः सकलबन्धविनिर्मुक्तत्वेनाविर्भूतस्वरूपो जीवः प्रतिपाद्यः, न तु सांसारिकावस्थाभेदकलुषितः, तत्र सत्यसङ्कल्पत्वादिगुणाबाधात्, अवस्थात्रयोपन्यासस्य तत्तदवस्थादोषाभिधानेन चतुर्थपर्यायोपदेशशेषत्वप्रतिपत्तेरिति समादधानः सूत्रकारः चतुर्थपर्याये प्रतिपाद्यस्य मुक्तस्येश्वरभावापत्तिं स्पष्टमाह ; तदभावे मुक्तेऽपि सत्यसङ्कल्पत्वाद्ययोगात् ; अनुक्रान्तस्य गुणाष्टकस्येश्वरादन्यत्रापि भावे कृतशङ्कापरिहारालाभाच्च । तस्मिन् सूत्रे "तस्मादविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृत्वभोक्तृत्वरागद्वेषादिकलुषितमनेकानर्थयोगि, तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं रूपं विद्यया प्रतिपद्यते" इति भाष्यकारोऽप्यतिस्पष्टं मुक्तस्य सगुणेश्वरभावापत्तिमाह ।

4·2242 अविरोधाध्यायेऽपि "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवासाधु कर्म कारयति तं यमधो निनीषते"[31] इत्यादि-श्रुतेस्तत्तत्कर्मकर्तृत्वेन तत्तत्कर्मकारयितृत्वेन च उपकार्योपकारकभावेन चावगत-योर्जीवेश्वरयोरंशांशिभावरूपसम्बन्धनिरूपणार्थत्वेनावतारिते "अंशो नानाव्यप-देशात्"[32] इत्यधिकरणे "जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखभोगेन ईश्वरस्यापि दुःखित्वं स्यात्, यथा लोके हस्तपादाद्यन्यतमांशगतेन दुःखेनांशिनो देवदत्तस्यापि दुःखित्वं तद्वत्; ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात्; अतो वरं पूर्वावस्था संसार एवास्त्विति सम्यग्ज्ञानानर्थक्यप्रसङ्गः"[33] इति-शङ्काग्रन्थेन, भामत्यादिषु[34] स्पष्टीकृतं बिम्बप्रतिबिम्बभावकृतासङ्करमुपादाय समाहितेन भाष्यकारो मुक्तस्येश्वरभावापत्तिं स्पष्टीचकार।

4·2243 साधनाध्यायेऽपि "सन्ध्ये सृष्टिराह हि"[35] इत्यधिकरणे स्वप्नप्रपञ्चस्य मिथ्यात्वे व्यवस्थापिते[36] तत्र मिथ्याभूते स्वप्नप्रपञ्चे जीवस्य कर्तृत्वमाशङ्क्य "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ"[37] इतिसूत्रेण जीवस्येश्वरा-भिन्नत्वात् सदपि सत्यसङ्कल्पत्वादिकमविद्यादोषात्तिरोहितमिति न तस्य स्वप्न-प्रपञ्चे स्रष्टृत्वं सम्भवतीति वदन् सूत्रकारः "तत्पुनस्तिरोहितं सत् परम-भिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्छक्तिरौषधवीर्या-दीश्वरप्रसादात्संसिद्धस्य कस्यचिदेवाविर्भवति, न स्वभावत एव सर्वेषां जन्तू-नाम्"[37] इति तत्सूत्राभिप्रायं वर्णयन् भाष्यकारश्च मुक्तस्य स्वप्नसृष्ट्याद्युप-योगिसत्यसङ्कल्पत्वाद्यभिव्यक्त्यङ्गीकारेण परमेश्वरभावापत्तिं स्पष्टीचकार।

4·2244 फलाध्यायेऽपि "स्वेन रूपेणाभिनिष्पद्यते"[38] इति मुच्यमानविष-यायां श्रुतौ केन रूपेणाभिनिष्पत्तिर्विवक्षितेति बुभुत्सायाम् "ब्राह्मेण जैमिनिरुप-न्यासादिभ्यः"[39] इतिसूत्रेण यद्ब्राह्मं रूपमपहतपाप्मत्वादि सत्यसङ्कल्पत्वा-द्यवसानं सर्वज्ञत्वसर्वेश्वरत्वादि च तेनाभिनिष्पत्तिः, "य आत्मापहतपाप्मा"[40] इत्याद्युपन्यासेन "स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा"[41] इत्याद्यैश्वर्यविदनेन चेति जैमिनिमतम्, "चितितन्मात्रेण तदात्मकत्वादित्यौडु-

लोमिः" [42] इत्यनन्तरसूत्रेण "एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" [43] इत्यादिश्रुत्या चैतन्यमात्रमात्मस्वरूपं इत्यवगतेस्तन्मात्रेणाभिनिष्पत्तिरिति मतान्तरं चोपन्यस्य, "एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः" [44] इतिसिद्धान्तसूत्रेण वस्तुदृष्ट्या चैतन्यमात्रत्वेऽपि पूर्वोक्तगुणकलापस्य उपन्यासाद्यवगतस्य मायामयस्य बद्धपुरुषव्यवहारदृष्ट्या सम्भवान्न श्रुतिद्वयविरोध इत्यविरोधं वदन् सूत्रकारः, सूत्रत्रयमिदमुक्तार्थपरत्वेन व्याकुर्वन् भाष्यकारश्च मुक्तस्येश्वरभावापत्तिं स्पष्टमनुमेने ।

भामतीनिबन्धप्रभृतयश्च श्रुत्युपबृंहितमिदं सूत्रजातं भगवतो भाष्यकारस्य 4·2245
उदाहृतं वचनजातं च तथैवान्ववर्तन्त ।

न च [45] श्रुत्युपबृंहितस्यैतावतः सूत्रभाष्यवचनजातस्य— 4·2246

"ऐश्वर्यमज्ञानतिरोहितं सद्ध्यानादभिव्यज्यत इत्यवोचत् ।
शरीरिणः सूत्रकृदस्य यत्तु तदभ्युपेत्योदितमुक्तहेतोः ॥" [46]

इतिसंक्षेपशारीरकोक्तरीत्याभ्युपेत्यवादत्वं युक्तं वक्तुम् ।

तस्मान्मुक्तानामीश्वरभावापत्तेरवश्याभ्युपेयत्वादेतदसम्भव एव प्रतिबिम्बे- 4·23
श्वरवादे दोषः । तदाहुः कल्पतरुकाराः "न मायाप्रतिबिम्बस्य विमुक्तैरुपसृप्यता" इति [47] । एतदसम्भवश्च एकजीववादपारमार्थिकजीवभेदवादयोरपि दोषः ।

यत्तु कैश्चित् द्वैतिभिरुच्यते—भेदस्य पारमार्थिकत्वेन मुक्तौ जीवस्येश्वर- 4·231
भावाभावेऽपि तत्रापीश्वर इव पृथगपहतपाप्मत्वादिगुणसम्भवादविरोधः—इति, तत्तुच्छम्; तथा सति जीवस्यापहतपाप्मत्वादिकमस्तीति न तस्य ब्रह्मलिङ्गत्वमिति शङ्कापरिहारालाभेन "उत्तराच्चेदाविर्भूतस्वरूपस्तु" [48] इतिसूत्रविरोधात्; "ब्राह्मेण जैमिनिः" [49] इतिसूत्रे जीवगतस्यापहतपाप्मत्वादेः, "उपन्यासादिभ्यः" इत्यत्रादिशब्दार्थत्वेन परेषामप्यभिमतस्य "जक्षन् क्रीडन् रममाणः" इत्यादिश्रुत्युदितस्य जक्षणादेश्च ब्राह्मत्वनिर्देशविरोधाच्च । भेदे तेषां गुणानां सत्यत्वेन "चितितन्मात्रेण" [50] इतिसूत्रोक्तस्य मुक्तजीवानां चैतन्य-

मात्रत्वस्य "एवमपि" इति[51] सिद्धान्तसूत्रेऽङ्गीकारविरोधाच्च; "सम्पद्याविर्भावः"[52] इत्यधिकरणविरोधाच्च। तत्र हि—"स्वेन रूपेणाभिनिष्पद्यते" इतिश्रुतौ आगन्तुना केनचिद्रूपेणाभिनिष्पत्तिर्नोच्यते; स्वेनशब्दवैयर्थ्यापत्तेः; येन रूपेण आगन्तुना स्वयमभिनिष्पद्यते तस्यात्मीयत्वस्यावक्तव्यत्वात्; तस्मादात्मवाचिस्वशब्दोपादानात् नित्यसिद्धेन स्वस्वरूपेणैवाभिनिष्पत्तिर्विवक्षिता, न तु केनचिद्धर्मेण—इति व्यवस्थापितम्। किञ्चेदमपहतपाप्मत्वादि जीवस्य मुक्तावागन्तुकं चेत्, "सम्पद्याविर्भावः" इति मुक्तावागन्तुकरूपनिषेधेन, "पराभिध्यानात्तु तिरोहितम्"[53] "उत्तराच्चेदाविर्भूतस्वरूपस्तु"[54] इत्यपहतपाप्मत्वादेर्बन्धमुक्त्योस्तिरोभावाविर्भावप्रतिपादनेन च विरोधः स्यादिति नित्यसिद्धं वाच्यमिति बन्धस्य मिथ्यात्वं दुर्वारम्। नित्यसिद्धमपहतपाप्मत्वं हि सर्वदा पाप्मरहितत्वम्। न च वस्तुतः सर्वदा पाप्मरहिते पाप्मसम्बन्धः, तन्मूलककर्तृत्वभोक्तृत्वसम्बन्धो वा पारमार्थिकः सम्भवति।

4·2311 एवं च जीवस्येश्वराभेदोऽपि दुर्वारः, श्रुतिबोध्यतदभेदविरोधिबन्धस्य सत्यत्वाभावात्; अन्यथा संसारिणि नित्यसिद्धसत्यसङ्कल्पतिरोधानोक्त्ययोगाच्च। न हि जीवस्य संसारदशायामनुवर्तमानो यत्किञ्चिदर्थगोचरः कश्चिदस्त्यवितथसंकल्पस्तिरोहित इति परैरपीष्यते; किं त्वीश्वरस्य यन्नित्यसिद्धं निरवग्रहं सत्यसङ्कल्पत्वं तदेव जीवस्य संसारदशायामीश्वराभेदानभिव्यक्त्या स्वकीयत्वेनानवभासमानं तं प्रति तिरोहितमित्येव समर्थनीयमिति घट्टकुटीप्रभातवृत्तान्तः।

4·23111 नन्वपहतपाप्मत्वं न पाप्मविरहः, किं तु पाप्महेतुकर्माचरणेऽपि पापोत्पत्तिप्रतिबन्धकशक्तियोगित्वमिति न तस्य नित्यसिद्धत्वेन बन्धस्य मिथ्यात्वप्रसङ्गः; एवं सत्यसङ्कल्पत्वमपि शक्तिरूपेण निर्वाच्यमिति नेश्वराभेदप्रसङ्गः। इति चेत्—

4·23112 मैवम्; एवं शब्दार्थकल्पने प्रमाणाभावात्। न हि पापजननप्रतिबन्धिका शक्तिः संसाररूपपरिभ्रमणदशायां पापानुत्पत्त्यर्थं कल्पनीया, तदानीं तदुत्पत्तेरिष्टत्वात्। विद्योदयप्रभृति तु विद्यामाहात्म्यादेवाश्लेषः "तदधिगम

उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" [55] इतिसूत्रेण दर्शितः । तत एव मुक्तावप्यश्लेष उपपद्यत इति व्यर्था शक्तिकल्पना । तस्मादुदाहृतश्रुतिसूत्रानुसारिभिर्मुक्तजीवानां यावत्सर्वमुक्ति वस्तुसच्चैतन्यमात्रत्वाविरोधिबद्धपुरुषाविद्याकृतनिरवग्रहैश्वर्यतदनुगुणगुणकलापविशिष्टनिरतिशयानन्दस्फुरणसमृद्धनिस्सन्धिबन्धपरमेश्वरभावापत्तिरादर्तव्येति सिद्धम् ।

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य
श्रीसर्वतोमुखमहाव्रतयाजिसूनोः ।
श्रीरङ्गराजमखिनः श्रितचन्द्रमौले-
रस्त्यप्पदीक्षित इति प्रथितस्तनूजः ॥ १ ॥

तन्त्राण्यधीत्य सकलानि सदावदात-
व्याख्यानकौशलकलाविशदीकृतानि ।
आम्नायमूलमनुरुध्य च सम्प्रदायं
सिद्धान्तभेदलवसङ्ग्रहमित्यकार्षीत् ॥ २ ॥

सिद्धान्तरीतिषु मया भ्रमदूषितेन
स्यादन्यथापि लिखितं यदि किञ्चिदस्य ।
संशोधने सहृदयाः सदया भवन्तु
सत्सम्प्रदायपरिशीलननिर्विशङ्काः [56] ॥ ३ ॥

इति शास्त्रसिद्धान्तलेशसङ्ग्रहे चतुर्थः परिच्छेदः

॥ समाप्तोऽयं ग्रन्थः ॥

## CORRECTIONS.

### Sanskrit Text and Notes.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| Page | 1 | Line | 7 | for | तन्मूलानिह | read | तन्मूलानिह |
| ,, | 3 | ,, | 23 | ,, | अग्निचयते | ,, | अग्निचयने |
| ,, | 5 | ,, | 8 | ,, | अद्वैतात्म | ,, | अद्वैतात्म |
| ,, | 7 | ,, | 20 | ,, | परिसङ्ख्य | ,, | परिसङ्ख्या |
| ,, | 9 | ,, | 10 | ,, | वस्त्वगम | ,, | वस्त्ववगम |
| ,, | 18 | ,, | 4 | ,, | रूपानुपाहित | ,, | रूपानुपहित |
| ,, | ,, | ,, | 25 | ,, | णाज्ज्ञस्य | ,, | णाज्ञस्य |
| ,, | 29 | ,, | 14 | ,, | कस्याचिद् | ,, | कस्यचिद् |
| ,, | ,, | ,, | 22 | ,, | वाहिका | ,, | वाहिक |
| ,, | 32 | ,, | 20 | ,, | दीपयेदा | ,, | दीपयेद् |
| ,, | 34 | ,, | 4 | insert comma | | after | रूपेण |
| ,, | 51 | ,, | 12 | for | सत्वं | read | सत्त्वं |
| ,, | 55 | ,, | 18 | ,, | सर्ब | ,, | सर्व |
| ,, | 62 | ,, | 10 | ,, | चन्द्रावालोकन | ,, | चन्द्रावलोकन |
| ,, | 70 | ,, | 11 | ,, | चेत | ,, | चेत् |
| ,, | 110 | ,, | 15 | ,, | विक्षेपे | ,, | विक्षेपः |

---

### NOTES

| Page. | Line. | |
|---|---|---|
| vii | 15 | *for* 'jñāha *read* 'jñāna |
| ix | 6 | *for* 'peksitatvat *read* 'pekṣitatvāt |
| xii | 1 | *for* adyāropa *read* adhyāropa |
| ,, | 23 | *delete* whole line |
| xvi | 20 | *for* svadhāra *read* svadāra |
| xvii | 18 | *for* abhidāyi *read* abhidhāyi |
| xix | 23 | *for* viśayatvāt *read* viṣayatvāt |

# NOTES

## *CHAPTER I*

1 "vyavahāra-siddhi" (*V*, *C*).

2 "anativistarān" (*V*, *C*).

3 *Bṛh.*, II, iv, 5.

4 *Āp. ŚS.* I, xix, 1.

5 "vinā viniyogam" (*K*). The Kumbakonam edition is the only printed text which reads thus; the pratīka in the commentary follows the text in either case, though the meaning "vidhāyaka śabdaḥ" suits "niyoga" better. The reading "viniyogam" has the support of Mss. $E_1$ and $E_3$.

6 *Āp. ŚS.* I, xix, 2.

7 *Taitt Sam.*, V, i, 2 (1).

8 *Ś*, *B*, and *K* omit "vidher".

9 *Ved. Sū.*, III, iv, 47—49; the sentence quoted is from the bhāṣya and occurs in the middle of the commentary on III, iv, 47 For the *Prakaṭārtha* view, see the commentary on the same section, esp. p. 523, Vol. II, of Ms. No. R 3072, of the Oriental Mss. Library, Egmore.

10 *Ved. Sū.* IV, i, 1.

11 "yujyate" (*V*).

12 *PM*, Chapter XI, i, 28.

13 *Taitt.*, II, 4.

14 *Bṛh.* IV, iv, 19.

15 *Katha*, III, 12.

16 *Śvet.*, IV, 7.

17 "pākṣika-prāptir na nivārayitum": ($E_3$).

18 "guru-mukhā-'dhīnād adhyayanād". ($E_3$).

19 $E_3$ adds "tadartham śravaṇa-niyamaḥ"

20 *Muṇḍ*, I, ii, 12

21 *Pat.*, I, i, 1 (Vol. I, p. 2).

22 *PM*, IV, ii, 23—24.

23 *PM*, III, iv, 12—13.

23a Cp. *PM*, II, i, 30.

24 The authority for this position as well as that of the succeeding para seems to be contained in the following passage from p. 4 of the *Vivaraṇa*:

nanu "śrotavyaḥ" iti vidhir mokṣa-sādhana-brahmā-'tma-jñānāya vedānta-vākya-vicāram sādhana-catuṣṭaya-sampannasya vidhātum na śaknoti, śravaṇādīnām viṣayā-'vagamam praty anvaya-vyatireka-siddha-sādhanatvāt. na cā 'vaghātādivad ubhayā-'rthatā sambhavati, dṛṣṭā-

'dṛṣṭa-prakāra-dvaya-sādhyā-'pūrvavad ihā 'drsta-sādhyasyā 'bhāvāt, ātmā-'vagamasya drsto-'pāya-mātra-sādhyatvāt—iti, nai 'tat sāram. ātma-tattvā-'paroksasya sai vā-'drsta-sādhyatvasya vakṣyamānatvād avaghātā-'divad ubhayā-'ithatayā vidhāno-'papatteh. nanu vidhi-paratve vedāntānām tannisthatayā brahma-svarūpasyā 'siddhy-ādi-doṣa-prasaṅgān nā 'sti śravaṇādi-vidhānam iti bhāṣya-kārair eva darśitam. satyam, jñāna-vidhis tatra nirākrtah, na śravanādi-vidhih, tato 'kta-dosa-prasangā-'bhāvāt katham? darśana-vidhāne hi brahma karmatayā guna-bhūtam prasajyate, brahma-darśanam uddiśya vicāra-vidhāne tu svapradhāna-phala-bhūta-darśana-viśesanatayā brahmā 'pi svapradhānam bhavati, na tu guna-bhūtam, iti vedāntair brahmani svapradhāne pratipādyamāne taddarśanāya śravaṇādi-vidhānam nai'va virudhyate.

25 *Brh*, IV, iv, 19.

26 Commentary on *Bh.G.*, II, 21.

27 For the view that intuition is only by the manas, as purified by teaching etc, see the *Bhāmatī*, (*AKS*), p 58; this does not, however, countenance the view of niyama-vidhi.

28 *Bṛh*, II, iv, 5.

29 "śābdā-'paroksa-jñānā-'nangīkaranāt". (*K*).

30 *SŚ.*, I, 63 and the Subodhinī commentary thereon; the explicit reference to "draṣṭavyah" is found in the commentary. Is the commentator one of those denoted by "anusārinah"?

31 *Chānd*, II, xxiii, 2.

31a *Mund*, II, ii, 5.

32 *Ved. Sū*, III, iv, 47.

33 The Bhāsya uses the words "eṣa vidhih" not "niyama-vidhiḥ"; *V*, *B*, and *C* read "yasmāt pakṣe" and "tasmān niyama-vidhiḥ".

34 "asādhana etc." ($E_3$).

35 The verse has not been traced so far; but the view, wavering between niyama-vidhi and parisaṅkhyā-vidhi, with a leaning towards the latter, is to be found in the *Vārtika* of Nārāyana Sarasvatī, edited by Mm. Anantakrishna Sastri in his *Brahmasūtrabhāsya* with nine Commentaries; see Vol. II, pp. 1168, 1169.

36 *Ved. Sū.*, I, i, 4; see *Bhāmatī* (*AKS*), p. 129.

37 'vijñānā-'rtham": (*Ś*,*K*,*B*).

38 "gurū-pagamanam": ($E_3$),

38a "phala" for "labdha"; (*V*,*B*,*C*).

38b *Chānd.*, II, xxiii, 2.

39 "prabandhāder vyāvṛttatvāt"; ($E_3$).

39a *Taittirīya Āranyaka*, II, 19.

40 *Ved. Sū.*, III, iv, 47—49.

41 See the *Bhāmatī* (*AKS*), pp. 115, 130 and 153.

42 *Taitt.*, III, 1.

43 *Ved. Sū.*, I, ii, 9.

44 *The Vedāntakaumudī* of Rāmādvayācārya, an unpublished work, probably of the thirteenth century, a Ms. is available in the Government Oriental Mss Library, Egmore.

45 See the *Bhāmatī* and the *Kalpataru* (*AKS*), particularly p. 87.

46 *SŚ.*, I, vv. 323, 331—333, 519—528 (more generally 513—549).

47 *Taitt.*, II, 1.

48 *SŚ.*, I, v. 330.

49 *Muṇḍ.*, I, i, 9.

50 *Ved. Sū.*, I, i, 20.

51 *Ibid.*, I, ii, 1.

52 *Chānd.*, III, xiv, 2

53 *SŚ.*, I, vv. 326—329.

54 *Ibid.*, I, v. 549.

55 Cp. *Vivarana*, pp. 222, 224, 231.

56 *Praśna*, VI, 5.

57 "avidyā-nivṛttyā"; (*V*,*C*,$E_3$).

58 *Muṇḍ.*, III, ii, 7.

59 *Ved. Sū.*, IV, ii, 15.

60 *Ibid.*, I, i, 1 (introductory).

61 *Vivarana*, pp. 72, 73.

62 *Muṇḍ.*, II, i, 3.

63 *Ved. Sū.*, II, i, 26.

64 *Ibid.*, II, i, 28.

65 *V*, *C*, and $E_3$ read "īśvarādi", the reading "īśvaratvādi" is adopted here because of its agreement with the majority of the printed texts, and because what is assumptive is the lordship, not the Lord Himself, who is identical with the jīva and real.

66 *Śvet*, IV, 10.

67 For quotations from the *Padārthatattvanirnaya*, and some other unpublished Mss, see the Appendix.

68 "kecid uktām eva prakriyām āśritya": (*B*,*K*).

69 "vivarta-pariṇāmo-'pādāna-dvaya-sādhāraṇam": ($E_3$).

70 *Ved. Sū.*, II, i, 14.

71 *Ibid*, *Bhāmatī* (*AKS*), p. 454.

72 *Ibid.*

73 *SŚ.*, I, v. 323; vv 331—333 The illustration used by Appayya is not found in this context, the need for a dvāra-kārana is illustrated through the apūrva generated by the Citra-yāga, through which channel alone it can produce the effect desired.

74 See generally *Bhāmatī* (*AKS*), p 378, also the *Kalpataru*, p 471.

75 *Bṛh.*, II, v, 19.

76 *Śvet.*, VI, 8.

77 *Siddhāntamuktāvalī*, v. xxxviii, pp 116—118.

77a *Prakaṭārtha* (Madras University), pp. 3, 4.

78 This is the first chapter of the *Pañcadaśī*, not Nṛsimhāśramin's work of that name; the reference is to I, vv. 16 and 17.

79 *Nrs. Ut.*, 9.

80 *SŚ.*, III, v. 148; vv. 277, 278 (see also I, v 327).

81 *Pañcadaśī*, VI, vv. 1—4, 18—23, 33—35, 38—40, 153—155, 161, 162.

82 "tu" (*B,C,V*).

83 *Bṛh.*, IV, v, 13

84 *Ibid.*, IV, v, 14.

85 See *Pañcadaśī*, VIII, vv. 43, 44; *Naiskarmyasiddhi*, II, v. 29.

86 *Vivarana*, p 238. "kārya-kāraṇa-dravya-vyatiriktatve sati dravyā-'bhidhāyi-padayoh sāmānādhikaranyam so 'yam itivad ekasya dravyasya upādhi-parikalpita-bheda-vyudāsena eka-dravya-paryavasāyī 'ty avagamyate"; see also pp 237, 239 ff.

87 "abādhyasya": (*V,C*).

88 *Māṇḍ.*, V.

89 *Ibid.*, VI.

90 *Pañcadaśī*, VI, v 162.

91 *Ibid.*, XI, vv. 62—68, 72, 73; see also vv 32—35, 38—42, 45, 54, 58.

92 *Ibid.*, VI, vv. 1—4.

93 "avasthā-bheda-catuṣṭayam": (*K*).

93a *Māṇḍ.*, II.

94 See Śankara's commentary on *Gauḍapāda-kārikā*, I, 2, under *Māṇḍ.*, VI.

95 See vv xvi and xvii.

96 See *Vivaraṇa*, p. 65, for the basis of this position. The verse is from the *Viṣṇupurāna*. Cp. also *VPS.*, 65—68.

97 *Kalpataru*, (*AKS*), p 482.

98 *Ved. Sū*, II, i, 33.

99 *Ibid.*, IV, iv, 15; the penultimate (*upa antya*) section of the śāstra.

100 *Bṛh*, IV, v, 14.

101 *Ibid.*, III, vii, 22

102 See the *Bhāmatī* and the *Kalpataru* (*AKS*), pp. 7, 8, also the *Parimala* (*AKS*), pp. 155—159

103 "pratibimbo-'pādhitva-kalpanāyā" (*V.C*).

104 "ādaraṇīyatvena" (*K*)

105 "tatra sattvā-'bhyupagamena" ($E_3$).

106 *Ved. Sū.*, III, ii, 18.

107 *Ibid*, III, ii, 19.

108 *Ibid.*, III, ii, 20.

109 *Brahmabindu*, 13.

110 *Ved. Sū.*, II, iii, 43

111 The view set forth is that of the *Bhāmatī* For a slightly fuller exposition on the same lines as the present, see the concluding portion of the *Parimala* on I, i, 4, pp. 155—159 (*AKS*)

112 Śaṅkara's Works, Mem. Ed, Vol. VIII, pp 259—260.

113 The verse cannot be traced; the story occurs in the *Vārtika*, vv. 506—517, pp. 970—972.

114 "sahaja-sarvajñatvādi-kāraṇatvādi-dharmaiḥ saha": ($E_3$).

115 *Ved. Sū.*, II, i, 22.

116 *Ibid.*, II, i, 33.

117 *Bṛh.*, I, iv, 10.

118 *Ved Sū.*, IV, ii, 12.

119 "śuka-muktatva-pratipādaka-bhāṣyasya": (*Ś,K*,$E_3$).

120 *Muṇḍ.*, II, ii, 8.

121 "paryavasitatayā": (*Ś,K*).

122 "jahāti": (*Ś,K*).

123 Cp. *ŚS*, II, v, 132, particularly the commentary: "tac co 'tpanna-vidyam jīvam tyajati, jātir iva naṣṭām vyaktim".

124 "baddha-mukta" etc.: (*V,B,C*).

125 See the *Bhāmatī* (*AKS*), p. 378; also the *Kalpataru*, pp. 235, 236.

126 This is the view generally attributed to Maṇḍana and Vācaspati; see, for instance, *VPS*, p. 224, and the *SB*, pp. 115—117, compare also Brahmānanda's Commentary on the latter, and the *Bhāmatī Catussūtrī*, (*TPH*).

127 "kāriṇī": (*K*)

128 "api vā": (*Ś,K*).

129 Cp. *SŚ.*, II, v. 133.

130 *Chānd.*, VI, ii, 3.

131 *Taitt.*, II, 6

132 *Ibid.*, II, 7

133 Cp *Kalpataru* (*AKS*), p. 4.

134 *Bṛh.*, IV, iii, 10

135 Bhāṣya on *Ved. Sū.*, III, ii, 4.

136 *Ved. Sū.*, I, i, 3.

137 Cp. *Pañcadaśī*, VI, vv. 153—162.

137a *Prakaṭārtha*, (Madras University), p. 3.

138 *Tattvaśuddhi*, page 18

139 *Kaṭha.*, V, 15.

140 *Chānd.*, VI, ii, 1.

141 The reading adopted is that of $A_2$; *V,B* and *C* read: "na tu sarva-jñātṛtva-rūpam sarvajñatvam iti cet, satyam, sarva-visaya-jñānā-'tmakam eva brahma, na tu sarva-jñāna-kartrtva-rūpam jñātrtvam asti" $A_1$ omits "satyam" and reads "jñātatvam" instead of "jñātṛtvam" at the end. *Ś* reads "na tu tasya jñāna-kartrtva-rūpam jñātrtvam asti". It is cited in this form in the commentary The reading here adopted has the merit of being full and clear.

142 *Ved Sū.*, II, iv, 19.

143 *Muṇḍ.*, I, i, 9

143a Cp *Bhāmatī* (*AKS*), p. 166.

144 Cp. *Vivarana*, p. 72

145 "samsargena": (*Ś,K*).

146 It is a disputed point whether conjunction and disjunction can ever be originated by anything other than karma, Citsukha, for instance, criticises the view of conjunction caused by conjunction and disjunction caused by disjunction; see *Citsukhī*, (2nd edn.), pp. 189—192.

147 Cp *VPS*, p. 71

148 "tadviṣaya-samsargā-'bhāve taddraṣṭṛtva-sambhave": (*V*, *C*).

149 "tatsambandhasyai 'va tatsambandhatvāt": (*Ś,K*, $A_2$); "tatsambaddhatvāt" ($E_3$).

150 "sampratipatteḥ": (*Ś,K*,$E_3$).

151 "tadbhāna-nivartyasya": (*V*, *C*).

152 "āvaraṇā-'bhibhāvakatvā-'nāpattih": (*V*, *C*).

153 *V* and *C* omit "tannivartyāni".

154 Cp. *Iṣṭasiddhi*, p. 63: "kim anantāni śukty-ajñānāni? bāḍham; anantāny eva, yady anantāni śukti-jñānāni". The statement in the form "yāvanti jñānāni" etc. is not to be found in that form in the *Iṣṭasiddhi*, though that form of recapitulating the doctrine of that work is used by both Raṅgarāja Adhvarin and Madhusūdana Sarasvatī.

155 "aparoksa-jñānam" (Ś, K).

156 "viśesā-'darśanam": ($E_3$).

157 "nipatanti": (Ś, K, $E_3$).

158 "anabhibhāvakatvena": (Ś, K, $E_3$).

159 "āvaranā-'ntara-sadbhāvāt" ($E_3$).

160 "kāla-kālo-'palaksita". (V, C).

161 "avasthāyitvena": ($E_3$).

162 Cp *Vivarana*, p 43, (ll. 1—3).

163 "niyamana": (V, C).

164 V and C omit "sambhinna".

165 "visayam": (V, C).

166 Ś and K read "viksepa-viśesa-darśanāt".

167 Cp. *Tattvadīpana*, p. 299.

168 "antah-karano-'pahita-sāksy-asamsarge": (K).

169 The demonstration of mūlā-'jñāna in the *Vivarana* occurs on p 12, where the sentence used is "aham ajñah", not "idam aham na jānāmi"; but there is really no difference, esp., since the former is equated with "mām anyañ ca na jānāmi".

170 *Pañcadaśī*, VIII, vv. 3, 20, 21, 24, 25.

171 *Śvet.*, VI, 11

172 *Ibid.*, IV, 6.

173 *Pañcadaśī*, X, vv 10, 11, 12; 14.

174 *Ibid.*, X, v 11.

175 "vikāra-vartitvāt". (V,C.)

176 *Pañcadaśī*, VIII, vv. 21, 25, 59.

177 *Citsukhī*, p 374

178 "jīvād bhedena". (K). The reading of the printed edition of the *Citsukhī* is "jīvā-'bhedena", (which is also the reading of $A_1$ and $A_2$).

179 "viditam": (V, C); "veditavyam": ($A_1$ and $A_2$).

180 *Śvet*, VI, 11.

181 *Brh*, IV, iii, 21

182 *Ibid*, IV, iii, 35.

183 *Ved Sū.*, II, iii, 42.

184 *Śvet*, VI, 11

185 *Mund.*, III, i, 1.

186 *Ved. Sū.*, I, ii, 11 and 12.

187 "jīvaparo 'bhaya-paro na tu jīva-sākṣiṇor bheda-paraḥ" ($E_3$).

188 For the views in this paragraph and the previous one, compare *VPS*, p. 74.

189 Cp. *Advaitadīpikā*, II, p. 406; the idea is found also in the *Advaitamukura*.

190 *Vivarana*, p. 56; the rest of the sentence contains an interesting analogy referred to in para 5 14231

> "tīvra-vāyu-viksipta-pradīpa-prabhāvan mithyā-'jñāna-viksiptatayā na spastam avabhāsate, susuptau tu tadabhāvād adhikam vyajyata iti".

191 "spaṣṭāt sākṣisu sukhāt": ($E_3$).

192 Cp. *Vivaraṇa*, p. 46: "nanu 'tvad-uktam aitham na jānāmi' iti pratibhāsamānam evā 'jñānasya vyāvartakam avabhāsate" etc.

193 Cp *Advaitadīpikā*, I, pp 172—173. On the topic treated in section 5 14233, see *Ibid.*, I, pp. 385—387.

194 *Pañcadaśī* VIII, v. 4.

195 "pratyakṣa-laksanam": (*V,B,C*); "pratyaksa-karanam": ($E_3$).

196 Cp. *Vivaraṇa*, p 11, where it is said that co-presence and co-absence establish ignorance as the cause of superimposition.

197 *SŚ.*, I, vv 31, 32.

198 "śuktī-'damtva-darśanā-'bhāvena": ($E_3$).

199 "kim tu cakṣur-janya" etc.: ($E_3$).

200 "idam-vrtty-abhivyakte sāksiny adhyāsāt": ($E_3$).

201 "kusumbhāruṇimna"· (*K*).

202 "cā 'samīpe"· ($E_3$)

203 Cp *Pañcapādikā*, p. 7.

204 "bhāva-mātrā-'bhyupagame": (*K*).

205 "anyathākhyāti-prasārikā": (*V,C*).

206 "adhyāsayor". (*V,B,C*).

207 *Vivarana*, p 48 et seq: "adhyasyamānena samāne-'ndriya-vijñāna-visayatvam evā 'dhisthānasya dṛṣṭam" etc

208 "nirgamana-niyamā-'bhyupagamaḥ": ($E_3$).

209 "viśeṣa-śabdah". (*V,B,C*).

210 "tadvisaya-bhāna-nivartyam" (*B*).

211 "kāranā-'ntarā-'bhāvena": (*V,C*).

212 "indriyasye 'va": (*B*).

213 *Chānd.*, VII, 1, 3

214 "brahmany anāvrtā-'mśa-niyatasya": ($E_3$).

215 "prakaraṇake": ($E_3$)

216 "samanuyanti". (*K*, $E_3$).

1 "ghaṭa-paṭādı"· ($E_3$).

2 "tat sad ıty eva": (*C,V*).

3 "bhrāntyā eva"· ($E_3$).

4 "anumıty-abhāvena": (*C,V*).

5 "sapaksatā"· (*C,V*); "sapaksa-tadbheda": ($E_3$).

6 "tadabheda-jñāna-vıghaṭanīyasyā 'peksıtatvat": (*C,V*).

7 "vrttı": ($E_3$).

8 "vrttı": ($E_3$).

9 Cf. *SŚ.*, II, 7, 8.

10 *Brh*, II, ıv, 5

11 *Brh.*, II, i, 20.

12 "sattva": ($E_3$).

13 Cf. *Bhāmatī*, pp. 9, 10.

14 *Nārada Smrtı*, Introductıon, I, 72, 73; this is *not* the sākṣi prakarana.

15 "itı prathamam-māna-nıścayena"· ($E_3$).

16 "anaılyatva-buddheh" ($E_3$).

17 *Drgdrśyavıveka*, v. xx.

18 "prabalatve"· ($E_3$).

19 Cf *Bhāmatī*, I, ııı, 33; pp. 343, 344, (*AKS*).

20 "vigrahādı katham" ($E_3$).

21 "tātparya-vākye ca"· ($E_3$).

22 "prāmānyāt" ($E_3$).

23 "na tu": ($E_3$).

24 "mrdubhāva": ($E_3$).

25 "śrutı-mātrasya pratyaksāt prābalyam"; (*B,K*).

26 "anubhāvā-'virodhāt": (*C,V*).

27 *PM*, I, 4, xiii, 23.

28 $E_3$ omıts "bhoktṛtva".

29 $E_3$ omıts "śuddhasya".

30 *Brh.*, IV, iv, 19.

31 *K* omıts from "ne 'ha nānā 'stı" &c. up to "ıty atra" and begins wıth "kathañcıt".

32 For the apacchedā-'dhikaraṇa, see *PM.*, VI, 5, xvii-xxi, 49-56, esp xix, 54.

33 *PM.*, VI, 5, xix.

34 *Śāstradīpikā*, VI, 5, xix, pp. 503, 504 (*AKS*).

35 *Nyāyaratnamālā*, X, v 14, (p 185, Chowkhambha).

36 *Loc cit*, p. 186, the printed text omits "sati" after "tatrai 'vam" and adds "iti" after "aṅgam".

37 *Śāstradīpikā*, p. 503 (*AKS*).

38 For the upakramā-'dhikaraṇa, see *PM.*, 4, xv, 36-37.

39 *Taitt. Sam.*, II, iii, 12, 1

40 "samarpaṇena" (*K*).

41 *Tantravārtika*, p 878 (Benares edition).

42 *Bṛh.*, IV, iv, 19.

43 "śrutavato": (*C*,*V*).

44 This word, found in all editions, seems to be unnecessary in view of the "āhuḥ" at the end of the paragraph.

45 *Bṛh.*, IV, iv, 19.

46 *Ibid.*

47 The *Vivaraṇa* support for this position is to be found on pp. 62–64, commenting on *Pañcapādikā*, pp. 21, 22.

48 This illustration is not found in *K*, and seems to be peculiar to North Indian Mss.; not found in $E_3$.

49 "tadantargamanenā 'ntara-sikatādi-grahaṇam"· ($E_3$).

50 The reference seems clearly to be to vv. xxxvi—xlvi of the *Dṛgdṛśyaviveka*, attributed to Bhāratītīrtha. It is an open question therefore whether Appayya means the preceptor of Vidyāraṇya or the preceptor, Vidyāraṇya, identifying him with Bhāratītīrtha.

51 'tad atra". ($E_3$).

52 "sannikarṣeṣu": ($E_3$).

53 *K*, *B*, $E_3$ omit "kim".

54 "pratibimba-mukha": ($E_3$).

55 $E_3$ omits "pratibimba".

56 "daurghaṭyam": ($E_3$).

57 "svapne 'pi": (*V*,*C*).

58 "vyāpiny avaruddhe tattaddeśe": (*V*,*C*).

59 "mukhādi-dharma-yuktam"· ($E_3$).

60 "rajato-'cita": ($E_3$).

61 "pratibandhakam yuktam": ($E_3$).

62 "vṛtti-manaḥ-pariṇāmānām": ($E_3$).

63 $E_3$ omits "upādhi".

64 "adhyāsa-nivṛtti-pratibandhaka". ($E_3$)

65 *Ved. Sū.*, III, iii, 3.

66 *Vivarana*, p 3; $E_3$ reads "tattva-jñānasya jāgrad-bodhavat", this is not supported by the *Vivaraṇa*, the entire sentence from the *Vivarana* reads thus "śāstram ca sambhāvita-viṣaya-prayojanam, avidyā-'tmaka-bandha-pratyanīkatvāj jāgrad-bodhavat"

67 "mūlā-'jñānenāvrtasya" $E_3$, and *K*, *C* reads "anāvṛtasya" both in the text and the commentary *B* reads "anāvrtasya" in the commentary alone. *V* reads "anāvrtasya"

68 "viprah"· ($E_3$).

69 "prapañcena" ($E_3$)

70 "ity āhuh"· ($E_3$).

71 "ahankārā-'vacchinna-caitanye" (*V*,*C*).

72 "avicchinna-deśatvena"· (*V*,*C*,*K*).

73 "pravrtti-sambhavāt"· ($E_3$).

74 "vartatām". ($E_3$).

75 Cp. *VPS*, p. 40.

76 *SŚ.*, I, 41—43.

77 $E_3$ omits "mātram".

78 *Brh.*, IV, iii, 9.

79 "pratipādāyati śrutih"· ($E_3$).

80 *Ved. Sū*, II, iii, 33.

81 "ity-adhikaraṇa-nyāyanirnayo-'kta-rītya". ($E_3$).

82 "jñāna-sādhanatvā-'bhāvāt": ($E_3$, *B*).

83 *Citsukhī*, Nirṇayasāgar edn. pp. 26, 27.

84 "sukha-sākṣi-prakāśah": ($E_3$ )

85 *Kalpataru*, III, ii, 1, pp. 687, 688 (*AKS*).

86 "iti cen na". ($E_3$).

87 "gajam": (*K*); "rajatādikam": (*B*).

88 "kārayati": ($E_3$).

89 For this position cp. *Siddhāntamuktāvalī*, v. xvii and comments, pp 40—50.

90 "dṛṣṭeḥ pūrvam ghaṭādy-abhāvenā 'saṅgacchamānām cakṣus-sannikarsā-'nuvidhāna-pratītam": ($E_3$).

91 For the position that sense-organs are not the causes (karaṇas) of knowledge even in waking, cp. *Siddhāntamuktāvalī*, v. xiv, p. 32.

92 *Taitt.*, II, 1.

92a The full form is "adyāropā-'pavādābhyām niṣprapañcam prapañcyate". Śankara cites it as "sampradāyavidām vacanam" in the *Gītābhāsya* on XIII, 13, and it occurs also in the *Pañcīkarana* attributed to him Maṇḍana too cites it in the *Brahmasiddhi*, p. 26.

93 "nyāya-vyutpattim" ($E_3$).

94 *Śāstradarpana* on I, iv, 4, p. 87 (Śrī Vāṇī Vilās edn ).

95 Cp *Siddhāntamuktāvalī*, comments under v. xvi, p. 39; "na ca pūrva-kāndasya prāmānyā-'nupapattih, tasyā 'pi sādhya-sādhana-bhāva-mukhena sattva-śuddhi-dvārena pravṛtti-dvāreṇa vā brahmany eva tātparyāt".

95a "sṛstei drsṭi-vādam" (*V*); "srsṭa-drsṭi-vādam" (*K*).

96 See *Vivarana*, p 40, on *Pañcapādikā*, p 14.

97 "śramo": (*V*,*C*).

98 "iti cen na": ($E_3$).

99 Cp. ".. manaso 'pi pratyaksatvo-'papatteh. na ca pratyaksatve sati indriyatva-vyākopah, tasya sāksi-vedyasyā 'py aindriyaka-jñānā-'visayatvene 'ndriyatvā-'vyākopāt": *Tattvapradīpikā*, p 27.

100 *Vivarana*, p. 42.

101 The commentator seems to read "asaty eva", the present being recognised as an alternative reading.

102 "artha-kriyā-mātra-kāritvam': ($E_3$).

103 "vrtti-viśeṣa": ($E_3$).

104 "ullekhitvam". ($E_3$).

105 The entire argument of sections 4 51, 4 52 and 4·53 is to be found in the *Advaitavidyāmukura*.

106 "ghaṭatvādi-pratikṣepake paṭatvādau": (*K*), "aghaṭatvādi-pratikṣepake paṭatvādau" (*B*).

107 "rajata-bhedā-'virodhi": (*V*,*C*). The commentator follows the reading adopted in the text.

108 "jñānā-'prāmānyasya": ($E_3$).

109 "aghaṭatvavat". (*V*).

110 "ghaṭitam eva": ($E_3$).

111 For the ārambhaṇā-'dhikarana, see *Ved. Sū.*, II, i, 14, *et seq.*

112 The reference is to the vācārambhaṇa-śruti, *Chānd*, VI, i.

113 *Bṛh.*, I, v, 3.

114 *Taitt*, II, 5.

115 *Bṛh*, IV, iii, 15.

116 *Bṛh.*, III, xix, 26.

117 *Bṛh.*, IV, iii, 7

118 *Bh. Gītā,* III, 27.

119 *Ved. Sū.*, II, iii, 33.

120 "tadāśrayatvasya sūtranāc ca": ($E_3$)

121 "asatya": ($V$, $E_3$).

122 *Katha.*, III, 4.

123 "upādhi-bheda-mātrena": ($E_3$).

124 $E_3$ omits "vyavasthā".

125 "śabdo-'palambhakatva-tāratamye-'ṣṭā-'niṣṭa" &c., ($V$).

126 "upapādana-niyamah": ($E_3$, $K$)

127 "pauruṣeya-rūpa-bhāvādi-dharmānām": $V$; $E_3$ has the same reading but without "rūpa".

128 For this view. cp. *Brahmasiddhi,* p. 72.

129 "abheda-sattvena": ($V$).

130 $E_3$ omits "eva".

131 "pātayantī 'ha kabandhā apy arīn yudhi": ($E_3$).

132 $E_3$ omits "anvayaḥ".

133 "prati-yujyante": ($E_3$).

134 "ananurodhinaḥ": ($E_3$).

135 *Ved. Sū.*, II, iii, 43 *et. seq.*

136 *Ibid.*, II, iii, 51.

137 *Ibid.*, II, iii, 52.

138 *Ibid.*, II, iii, 53.

139 "āpnuyāmi": ($V$).

140 *Śvet.*, V, 9.

141 "guṇatayā sarvā-'ngīṇa-sukhādy-upalambhah": ($V$, $E_3$).

142 The reference seems to be to Droṇa's Bṛhaspaty-aṃśatva, mentioned in the *Mahābhārata,* Ādi-parvan, (v. 63, Ch. LXI, of the Poona edn., v. 68, Ch. LVIII, Madras edn.):

"bṛhaspater bṛhat-kīrtir deva-ṛṣer viddhi bhārata|
aṃśād droṇam samutpannam bhāradvājam ayonijam ||"

143 "advaitavidyāyām": ($E_3$).

144 *Bh. Gītā,* XV, 7.

145 *Ved. Sū.*, II, iii, 43.

146 "tantram": ($E_3$).

147 $E_3$ omits "draṣṭuḥ".

148 This word is found only in $B$; but it seems necessary.

149 This is the reading of *B* and $E_3$; the other printed texts have "ātma-bheda-pratikṣepa" which is patently incorrect.

150 *Taitt*, II, 6.

151 *Taitt. Āraṇyaka*, III, xi, 1.

152 *Katha*, III, 1

153 Cp *Chānd*, III, xiv, 3; $E_3$ reads "eṣa ma ātmā".

154 *Chānd*, III, xiv, 3.

155 *Bṛh*, IV, iv, 2.

156 *Muṇḍ.*, III, ii, 8.

157 *Bṛh.*, IV, iii, 35.

158 *Bṛh.*, IV, iv, 22.

159 *Brahmabindu*, 13.

160 *Ved. Sū*, II, iv, 12.

161 *Katha.*, III, 1.

162 "siddhy-avaśyam-bhāvāt": ($E_3$).

163 "praveśa-śabdasya": ($E_3$).

164 "ity-ubhaya-śruty-upapādanam": (*K*, $E_3$).

## CHAPTER III

1 *Śvet.*, III, 8.

2 This follows the reading of $A_1$ and $A_2$; the printed texts and $E_3$ have "karmā-'peksa-mātra-parā".

3 See *Bhāmatī*, p. 61 (*AKS*).

4 *Bṛh.* IV, iv, 22.

5 "karmanām upayogah": ($E_3$).

6 "na syāt": (*V,B,C*).

7 "vidya-sādhanāni śama-damādīni": ($E_3$).

8 *Ved. Sū.*, III, iv, 27.

9 This is the reading of $A_1$ and $A_2$; the printed texts read "anusṭhānā-'yogāt".

10 'autkanṭhya-laksanāyām": (*V,B,C*).

11 $A_1$ and $A_2$; the printed texts and $E_3$ read: "tad-rocakau-'ṣadha".

12 "sādhanā-'nvaya": ($A_1$, $A_2$, $E_3$).

13 "balavattvāt": (*B,K*).

14 *Chānd.*, VIII, vii, 1 ("so 'nvesṭavyah, sa vijijñāsitavyaḥ").

15 *Bṛh.*, II, iv, 5.

16 "pratyayā-'rtha-vidheh": (*K*).

17 "anusṭhānā-'pattyā": (*B, K*).

18 *Bh. Gītā*, VI, 3.

19 "śuddhyā": ($E_3$).

20 *Naiskarmyasiddhi*, I, 49.

21 "viśiṣṭa-guru-lābha-nirvighna-śravaṇa-mananādi-sādhanāni": (*K*, $E_3$)

22 *Gautama Smṛti*, VIII, 22.

23 *K* and *B* omit "ayam".

24 *Ved. Sū.*, III, iv, 32.

25 Cp. *Kalpataru*, p. 907 (*AKS*).

26 *Ved. Sū.*, III, iv, 36.

27 "upārjita". ($A_1$, $A_2$).

28 *Ved. Sū.*, III, iv, 38.

29 "āśrama-karma-padasya": (*B*).

30 "ity abhisandhāya"· (*V, C*).

31 *SŚ.*, IV, 49–50.

32 "upakāra-kalpanam iva": ($E_3$).

33 $A_1$ and $A_2$ omit "adhvaresu"; $E_3$ reads "atra".

34 "upakārā-'kāṅkṣāyām": $A_1$, $A_2$; $E_3$ omits "tu".

35 "tesu" for "nityesu": ($K$, $B$).

36 This is the reading of $E_3$ and $A_2$; $A_1$ reads "nibarhakatvam" and the printed texts "nirvāhaktavam".

37 *Bh. Gītā*, III, 20.

38 *Bṛh Vārt.*, IV, iv, 1029 (p. 1889, Ānandāśrama).

39 *Ved Sū*, III, iv, 34.

40 "ubhaya-vidhānā-'yogāt"· ($A_1$, $A_2$, $E_3$).

41 "samsparśa" ($A_1$, $A_2$, $E_3$).

42 "adhikāri-sankocā-'bhāvena": ($A_1$, $A_2$).

43 *Ved Sū.*, I, iii, 34 *et seq.*

44 *Vasistha Smṛti*, Ch XVIII. (Ānandāśrama edn p 217).

45 This reading of $A_1$ and $A_2$ seems preferable to that of the printed texts: "vidyā-mahimnā"; the instrumental case is neither necessary nor suitable.

46 This reading of $A_1$ and $A_2$ seems preferable to the "smrteś ca" of the printed texts.

47 "avaidike" $A_1$, $A_2$

48 "svadhāra-vrttih", meaning "living with a wife of one's own caste alone" is the reading of the printed *Gautama Smṛti*.

49 *Gautama Smṛti*, X, 49–56.

50 *Manu Smṛti*, X, 126.

51 "anusthāne 'pi"· ($A_1$, $A_2$, $E_3$).

52 *Ved. Sū.*, I, iii, 38.

53 "mukty-arthatvam"· ($V$, $C$, $A_1$, $A_2$).

54 "saguna-vidyā-'rtha-karmā-'nuṣṭhānavat" is the reading of the printed texts, the present reading following $A_1$ and $A_2$ seems preferable.

55 Again, $A_1$ and $A_2$ seem to be preferable to the printed texts which read "vidyo-'tpatty-arthatvam".

56 "mātra-visayatvena"· ($B$,$K$).

57 *Bṛh*, IV, iv, 23.

58 *Ved. Sū.*, III, iv, 47; the quotation is slightly mangled.

59 *Bṛh.*, III, v, 1.

60 *Sambandha-vārtika*, v. 12 (p. 10, Ānandāśrama).

61 "phalatayā": ($A_1$, $A_2$).

62 *Bṛh. Vārt.*, III, v, 88 (p. 1253 Ānandāśrama).

63 *Jābālopaniṣad*, 4.

64 "trayāṇām varṇānām vedam adhītya catvāra āśramāh". ($V, C, A_1$); "trayāṇām api varṇānām amī vedās trayāṇām varṇānām catvāro 'dhītye cā 'śramāh". ($A_2$).

65 *Bṛh Vārt.*, III, v, 89 (p. 1254, Ānandāśrama).

66 "svayam": ($E_3$)

67 *PM*, I, iii, 3.

68 So $A_1$, $A_2$ and the Ānandāśrama edition of the *Bṛh Vārtikā*, III, v, 90 (p 1254); the printed texts of the present work read "vijñānam ced upeyate".

69 "jīvan-mukti-kāle" (*K, B*)

70 *Chānd*, II, xxiii, 2.

71 Bhāṣya on *Ved. Sū.*, III, iv, 38.

72 *Ved Sū.*, III, iv, 36.

73 *K, B* omit "anāśramiṇām".

74 *Ved. Sū*, III, iv, 39.

75 *Chānd*, VIII, xv, 1.

76 *Ved Sū*, IV, iv, 22.

77 "abhidāyi" (*K, B*)

78 This reading of $A_1$ and $A_2$ seems preferable to that of the printed texts. "abhyupagamāt".

79 "sarvatra vicāryā-'vagateḥ": ($E_3$).

80 *Ved Sū.*, III, iv, 51.

81 "prastuta-pratibandhe sati": ($E_3$)

82 "dṛṣṭā-'rthasyai 'va vedānta-śravaṇasya". (*K,B*).

83 "pravaṇasya": (*K*).

84 *Pañcadaśī*, ch ix, particularly vv. 54–64, 73, 131–135, 144.

85 *Śvet.*, VI, 13 (reads "sāṅkhya-yogā-'dhigamyam").

86 *Bh Gītā*, V, 5.

87 *Praśna*, V, 5.

88 *Ved. Sū*, I, iii, 13.

89 *Ibid.*, III, iii, 11.

90 *Ibid.*, III, iii, 33.

91 See *Pañcadaśī*, ix, 73.

92 *Kena*, I, 4.

93 *Ibid.*, I, 3.

94 "vāstava-vedyatvā-'parā": (*V*).

95 *Kaṭha*, II, 7.

96 See *Pañcadaśī*, ix, 54.

